राष्ट्रिया सङ्गोष्ठी

# शोधप्रविधिः पाण्डुलिपिविज्ञानञ्च/ संस्कृतविद्यानुसन्धानस्य आधारभूमिः नवसंभावनाश्च


प्रधानसम्पादकः

डॉ० एन्० आर्० कण्णन्

प्राचार्यः

संपादिका

आचार्या शैलकुमारी मिश्र


सितासिते सरिते यत्र सङ्गते तत्राप्लुतासो दिवमुत्पतन्ति।
ये वै तन्वं विसृजन्ति धीरास्ते जनासो अमृतत्वं भजन्ते।।




राष्ट्रियसंस्कृतसंस्थानम्

(मानितविश्वविद्यालयः)

गङ्गानाथझापरिसरः

चन्द्रशेखर–आजादोद्यानम्,

प्रयागः – 211002

राष्ट्रिया सङ्गोष्ठी

# शोधप्रविधिः पाण्डुलिपिविज्ञानञ्च/ संस्कृतविद्यानुसन्धानस्य आधारभूमिः नवसंभावनाश्च


प्रधानसम्पादकः

डॉ० एन्० आर्० कण्णन्

प्राचार्यः

संपादिका

आचार्या शैलकुमारी मिश्र






राष्ट्रियसंस्कृतसंस्थानम्

( भारतशासनमानवसंसाधनविकासमन्त्रालयाधीनः मानितविश्वविद्यालयः )

गङ्गानाथझा-परिसरः

प्रयागः

२०१६

ISBN-978-93-85791-17-6

ISBN-978-93-85791-17-6

संस्करण : प्रथम २०१६

सर्वाधिकार : प्रकाशक

मूल्य : ₹ २९०.०० मात्र

प्रकाशक : राष्ट्रियसंस्कृतसंस्थानम् गङ्गानाथझा–परिसरः

मुद्रक : एकेडमी प्रेस
६०२, दारागंज, इलाहाबाद
मो. : ९४१५२१४७८८

राष्ट्रिया सङ्गोष्ठी

# शोधप्रविधिः पाण्डुलिपिविज्ञानञ्च/ संस्कृतविद्यानुसन्धानस्य आधारभूमिः नवसंभावनाश्च

सम्पादकमण्डलम्

आचार्या शैलकुमारी मिश्र

प्रो. ललितकुमार त्रिपाठी

प्रो. विश्वम्भरनाथ गिरि

प्रो. रामकृष्णपाण्डेय 'परमहंस'

डॉ. शैलजा पाण्डेय



राष्ट्रियसंस्कृतसंस्थानम्

( भारतशासनमानवसंसाधनविकासमन्त्रालयाधीनः मानितविश्वविद्यालयः )

गङ्गानाथझा-परिसरः

प्रयागः

२०१६

**प्रो. पी. एन्. शास्त्री**
कुलपति
राष्ट्रिय संस्कृत संस्थान
मानित विश्वविद्यालय
(मानव संसाधन विकास मंत्रालय,
भारत सरकार के अधीन)
('ए' ग्रेड के साथ राष्ट्रीय मूल्यांकन
एवं प्रत्यायन परिषद् द्वारा मान्यता प्राप्त)



**Prof. P.N. Shastri**
vice-Chancellor
**RASHTRIYA SANSKRIT SANSTHAN**
Deemed to be University
(Under MHRD, Govt. of India)
(Accerdited by NAAC
With 'A' Grade)

RSkS/VC/Msg/2016-17/186

Date 14.12.2016

# शुभाशंसा

राष्ट्रियसंस्कृतसंस्थानस्य परिसरेषु श्रीगङ्गानाथझापरिसरः प्रयागक्षेत्रे विराजते। अत्र शोधकार्यं प्रधानं वर्तते। अस्मिन् सत्रे "संस्कृतविद्यानुसन्धानस्य आधारभूमिः नवसम्भावनाश्च" इति विषयमधिकृत्य राष्ट्रियसङ्गोष्ठी मार्चमासि सम्पन्ना। सङ्गोष्ठ्यां पठितान् निबन्धान् समाकलय्य ग्रन्थरूपेण प्रकाशनं भविता इति ज्ञात्वा सन्तोषमनुभवामि। विद्वद्भिः लिखितानां शोधप्रबन्धानां संग्रहात्मकोऽयं ग्रन्थः समेषां कृते उपकाराय भवतीत्यत्र नास्ति संशयः। शोधप्रविधिः पाण्डुलिपिविज्ञानं संस्कृतविद्यानुसन्धानं चेति विषयत्रिवेणीसङ्गमः श्रेयसे भूयादित्याशासे।

।। आकूतिः सत्या मनसो मे अस्तु ।। ऋ.

इति नवसम्भावनाजिज्ञासुः

प.ना.शास्त्री

(परमेश्वरनारायणशास्त्री)



# पुरोवाक्

अयि भोः महाशयाः!

संप्रति राष्ट्रियसंस्कृतसंस्थानान्तर्गतगङ्गानाथझापरिसरद्वारा आयोजितायां राष्ट्रियसंगोष्ठ्यां विचारिताः विषयाः चिरकालं तिष्ठन्तु तत्रानागतानपि जिज्ञासूनुपकरोतु इति धिया संगोष्ठ्यां प्रस्तुतानां शोधपत्राणां संग्रहरूपं "शोधप्रविधिः पाण्डुलिपिविज्ञानञ्च एवं संस्कृतविद्यानुसन्धानस्य आधारभूमिः नवसंभावनाश्च" इत्याख्यं पुस्तकं परिसरेण प्रकाश्यत इति श्रुत्वा नितान्तं हृष्यति मे हृदयम्।

राष्ट्रियसंस्कृतसंस्थानस्य अङ्गभूतेषु परिसरेषु पवित्रक्षेत्रे तीर्थराजप्रयागे विद्यमानः गङ्गानाथझा परिसरः अनुसन्धानैकप्रधानोऽद्वितीयतया विराजत इति सर्वैरपि विद्वद्भिः विदितमेव। अतोऽत्र मुख्यतया "शोधप्रविधिः पाण्डुलिपिविज्ञानञ्च एवं संस्कृतविद्यानुसन्धानस्य आधारभूमिः नवसंभावनाश्चे" ति विषये राष्ट्रियसंगोष्ठी प्रवर्तिता। अस्यां संगोष्ठ्यां विभिन्नदेशात् समागतानां पण्डितानां विमर्शपूर्णप्रवचनद्वारा संस्कृतसाहित्ये नानाशास्त्रेषु च विषयतत्त्वजिज्ञासूनां नूतनयुक्तिगर्भितविषयावगमः तथा गवेषणशैलीप्रदर्शनद्वारा मार्गनिर्देशपुरस्सरं विषयलाभश्च अवश्यं भूयादिति दृढीयान् मे विश्वासः। एतादृशरीत्या राष्ट्रियसंगोष्ठीं कर्तुं अनुमतिं प्रदत्तवद्भ्यः अस्याः संगोष्ठ्याः प्रधानसंरक्षकेभ्यः राष्ट्रिय-संस्कृत-संस्थानस्य कुलपतिमहोदयेभ्यः प्रो. परमेश्वर-नारायणशास्त्रिवर्येभ्यः आदौ धन्यवादान् व्याहरामि।

एतत्प्रकाशनाय लेखनप्रदानेन उपकृतवतां विदुषां सुचारुरूपेण मुद्रणादि–व्यस्थां विहितवतां संपादकमण्डलसदस्यानां विपश्चितां मुख्यतया राष्ट्रियसंगोष्ठ्याः सञ्चालनं तथा महत्या श्रद्धया व्यवस्थां च निर्व्यूढवतीभ्यः आचार्य– शैलकुमारी–मिश्रमहोदयाभ्यश्च हार्दिकं कार्तज्ञ्यं निवेदयामि।

सुधीविधेयः

श्रावणशुक्लसप्तमी
संवत् २०७३

डॉ. एन्. आर्. कण्णन्
प्राचार्यः



# सम्पादकवाक्

सृष्टेः प्रारम्भकालादेव शोधस्य प्रक्रिया अनवरतं प्रचलति, प्रकृत्यैव जिज्ञासवः मानवाः। कोऽपि चिन्तनशीलो जनः पूर्वोक्तमाप्तमपि वाक्यं निष्क्रियभावेन इदमित्थं रूपेण नैव स्वीकर्तुं शक्नोति। महाकविः कालिदासोऽपि कथयति यत् "पुराणमित्येव न साधु सर्वम् " इति। प्रत्येकस्मिन् युगे नूतनोद्भावनया सहैव पुरातनसिद्धान्तानां परिष्कारपरिवर्धनखण्डनमण्डनादीनामपि परम्परा निर्बाधतया प्रसरत्येव। यतो हि ज्ञानस्य न कापि सीमा वर्तते। मन्ये तस्मादेव भवभूतिना उक्तम् –

"कालो हि निरवधिर्विपुला च पृथ्वी"इति। इदं तथ्यमस्माकं शास्त्रीयपरम्परायां पदे–पदे दृश्यते। महर्षिबादरायणकृतब्रह्मसूत्राणां भाष्यं जगद्गुरुभिराचार्यैः शंकराचार्यप्रभृतिभिः आचार्यैः स्व–स्व सिद्धान्तानुसारेण कृतं विद्यते। आचार्यभरतेन स्थापितस्य रससिद्धान्तस्य व्याख्या परवर्तिनि काले अनेकैराचार्यैः विहिता। एवं शोधस्य प्रक्रियेयं अस्माकं तत्त्वविद्भि : ऋषिभिर्मुनिभिर्मनीषिभिश्च स्वकीयेन चिन्तनेन मननेन दर्शनेन च सर्वदा पल्लविता पुष्पिता संवर्धिता च। येषां परिणामस्वरूपं भारतीयसंस्कृतवाङ्मयस्येदानीं विशालं समृद्धञ्च साहित्यमस्ति। अद्यापि मनीषिणां मौलिकचिन्तनेन प्राचीनहस्तलेखग्रन्थानां सम्पादनेन प्रकाशनेन चेयं शोधपरम्परा निर्बाधतया अग्रे एधते।

अस्यां दिशि राष्ट्रियसंस्कृतसंस्थानस्य (मानितविश्वविद्यालयस्य) अङ्गभूतो गङ्गानाथझापरिसरोऽयं यः पूर्वं गङ्गानाथ झा– अनुसन्धान संस्थानस्य नाम्ना लब्धप्रतिष्ठ आसीत् सः सततं सचेष्टोऽस्ति । ऐषमः मार्चमासस्यः १०, ११ दिनाङ्कयोः (द्विदिवसीया) राष्ट्रियसंगोष्ठी अस्मिन् परिसरे आयोजिता आसीत् । अस्याः संगोष्ठ्याः कृते अस्माकं सम्माननीयैः कुलपतिभिः पी. एन्. शास्त्रिवर्यैः **'शोधप्रविधिः पाण्डुलिपिविज्ञानञ्च'/ संस्कृतविद्यानुसन्धानस्य आधारभूमिः नवसम्भानवनाश्च '** इति विषयानुमतिं प्रदाय अस्य परिसरस्य गौरवोवर्धितः। अयं परिसरः श्रीमद्भ्यः कुलपतिवर्येभ्यः आधमर्ण्यं व्यनक्ति। दर्शनशास्त्रस्य मर्मज्ञानां विदुषां प्राचार्याणां एन् .आर्. कण्णन्वर्याणामाध्यक्ष्ये सङ्गोष्ठीयं सुसम्पन्ना।वयं एतान् प्रति हृदयेन कृतज्ञाः स्म।

अस्यां सङ्गोष्ठ्यां विभिन्नपरिसरेभ्यः तिरुपतिस्थविद्यापीठादिभ्यश्च भागं गृहीतुं समागताः स्व-स्वशास्त्रेषु निष्णाता आचार्याः सहाचार्याः सहायकाऽचार्याः शोधच्छात्राश्च स्वकीयैः वैदुष्यपूर्णैः शोधपूर्णैश्च लेखैः सङ्गोष्ठीयं सफलीकृतवन्तः। इयं प्रकाशनसमितिः एतान् सर्वान् प्रति भूयो भूयः कृतज्ञतां ज्ञापयति धन्यवादांश्च समर्पयति।

इति शम्।

सम्पादिका
प्रकाशनसमितिश्च



# विषय सूची

# पाण्डुलिपिविमर्शः

प्रो० अशोक कुमार कालिया
कुलपतिचरः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः,

विविधभाषासु विनिबद्धाः तास्ताः पाण्डुलिपयः समग्रामपि भारतीयां सांस्कृतिकसम्पदां स्वात्मनि साधु कोडीकुर्वन्तीति विषयो नाऽस्ति तिरोहितः संस्कृतिविमर्शकानाम्। विगताद् बहोः कालाद् एतस्याः सम्पदाया महती अपूरणीया च क्षतिर्जाता उपेक्षायाः कारणादेव। किन्तु सन्तोषस्याऽस्ति विषयोऽयं यत् पाण्डुलिपिविषयमधिकृत्याऽद्याऽवधि उपेक्षायाः पाण्डुलिपिसंरक्षणचिन्ताया चाऽप्रियोऽध्याय इति प्रतिभाति। यत्र तत्र पाण्डुलिपिसङ्ग्रहालयेषु विद्यालयेषु विश्वविद्यालयेषु च सर्वत्र विषयस्याऽस्य महत्त्वमधिकृत्य तत्संरक्षणसम्पादनादिकं चोद्दिश्य चर्चा भवन्ति विविधकार्यक्रमा चाऽऽयोज्यन्ते। प्रश्नोऽयं समुदेति यत् का नाम पाण्डुलिपिर्यस्याः चर्चाः, जिज्ञासाः, मीमांसा च सहसा महत्त्वपूर्णाःसञ्जाताः। यथाऽहमवगच्छामि पाण्डुलिपि-स्वरूपमेवमुपस्थापयितुं शक्यतेः-

मस्याद्युपकृतस्तत्तल्लिप्यक्षरसमन्वितः।
हस्तेन क्वचिदुत्कीर्णो लिखितो लेखितोऽपि वा।।
कर्गदभूर्जताडादिपत्राणां कोऽपि सङ्ग्रहः।।
पञ्चसप्ततिवर्षेभ्यः प्राचीनः कुलशेवधिः।।
पुस्तकं कुत्रचित् पोथी कुत्रचिद् ग्रन्थ इत्यपि।
मातृका हस्तलेखो वा प्रोक्तः पाण्डुलिपिस्तथा।।

एवं प्रपञ्चितोऽयं विषयः सङ्ग्रहेणैवं वक्तुं शक्यते-

पाण्डुलिपिर्नाम हस्तलिखितलेखितोत्कीर्ण-मस्याद्युपकृततत्तल्लि-प्यक्षरसमन्वित-सार्थकर्गदभूर्जताडादि पत्राणां प्राचीनः विशिष्टः कोऽपि सङ्ग्रहः। भवतु पाण्डुलिप्यर्थकाऽन्यप्रचलितशब्दानां चर्चा समीक्षाऽप्याऽऽवश्यिका प्रतिभाति।

आङ्ग्ल-भाषायां 'मैन्यूस्क्रिप्ट' शब्दः सुविदितः बहुप्रयुक्तश्च दृष्टिपथं समायाति। एतच्छब्दस्य संस्कृतपर्यायत्वेन बहवः शब्दाः प्रचलिताः सन्ति, यथा-

पाण्डुलिपिः, पाण्डुलेखः, पुस्तकम् , ग्रन्थः, मातृका, हस्तलेख इत्यादयाः। शब्दार्थगर्भितया कयाचिल्लिप्या रञ्जितानि भूर्जपत्राणि, तालपत्राणि, कर्गदपत्राणि वा एतच्छब्दार्थं प्रकाशयन्ति।

**पाण्डुलेखः–** पाण्डुलेख इति शब्दः कमपि विशिष्टमर्थं प्रतिपादयति। शब्दकल्पद्रुमे आप्टे – कोषयोः पाण्डुलेखशब्दान्तर्गतं व्यासवचनत्वेन श्लोकोऽयमुपलभ्यते

"पाण्डुलेखेन फलके भूमौ वा प्रथमं लिखेत् ।
न्यूनाधिकं तु संशोध्य पश्चात् पत्रे निवेशयेत् ।।

एतदनुसारं कस्मिंश्चित् फलके काश्ठनिर्मितपट्टिकादौ भूमौ वा पाण्डुसंञ्कमृत्तिकया स्थूलरूपेण संशोधनापेक्षं यल्लिख्यते तत्पाण्डुलेख–शब्देनाऽभिधीयते। एवमयं शब्दः रफ्–ड्राफ्ट इत्याङ्ग्लशब्दसमान एव। एतस्मिन्नेवार्थे शब्दोऽयं याज्ञवल्क्यस्मृतेरःमिताक्षराटीकायामपि प्रयुक्त उदाहृत, चोपलभ्यते, यथा–

"एतच्च भूमौ फलके वा पाण्डुलेखेन लिखित्वा आवापोद्धारणेन विशोधितं पश्चात्पत्रे निवेशयेत्। 'पूर्वपक्षं स्वभावोक्तं प्राड्विवाकोऽभिलेखयेत् । 'पाण्डुलेखेन फलके ततः पत्रे विशोधितम्' इति कात्यायनस्मरणात् ।"

एवं पाण्डुलेखशब्दस्य पाण्डुलिपिशब्दस्य वाऽस्ति काचित्स्वकीयैवार्थसीमा।

**पुस्तकम्–** पुस्तकम् इत्यस्ति बहुप्रयुक्तः शब्दः। पाणिनिना चुरादिगणान्तर्गतं पुस्त् –बुस्त् –धातुद्वयस्य परिगणनं कृतमस्ति आदरानादरार्थयोः। यदा मस्यादिप्रयोगेण पुस्तकं विरच्यते तदा धातुरयमादरार्थकः। यदा च गृहादिकं लिप्यते तदाऽनादरार्थकोऽयं धातुः। घञ्प्रत्यययोगेन 'पुस्तम्' इति शब्दो निष्पद्यते, स्वार्थिककन् प्रत्यययोगेन पुस्तक–शब्दश्च। पुस्तकपत्राणि किं विधानि भवन्तीत्यस्मिन् विषये द्रष्टव्यमिदं वचनम् –

'भूर्जे वा तेजपत्रे वा ताले वा ताडिपत्रके।
अगुरुणापि देवेशि पुस्तकं कारयेत् प्रिये।।' (योगिनीतन्त्रे)

वेष्टनादिना संरक्षितः पत्राणां समवायः पुस्तकमुच्यते।

**ग्रन्थः** एतेषामेव पत्राणां वेधकर्मानन्तरं यदा सूत्रादिना ग्रन्थनं क्रियते तदा तदेव पुस्तकं ग्रन्थसञ्ज्ञां भजते। ग्रथ्यते विरच्यते इत्यस्मिन्नर्थे ग्रथ्धातोः कर्मणि घञि कृते ग्रन्थ शब्दो निष्पद्यते एवं सूक्ष्मभेदे सत्यपि पुस्तकग्रन्थ शब्दौ पर्यायर्तवेनैव व्यवह्रियेते।

**मातृका-** अन्योऽप्येकः शब्दः समुपलभ्यते बहुशो व्यवह्रियते च- मातृका इति। अत्र प्रश्नस्त्वयं समुदेति को वाऽर्थो मातृका शब्दस्य । 'इवे' सूत्रेण इवार्थके कनि प्रत्यये टापि च कृते मातृका- शब्दो निष्पद्यते, 'मातेव' इत्यर्थः च भवति। इवार्थके कनि प्रत्यये टापि च कृते मातृका-शब्दस्य 'वर्णमाला' इत्यर्थः प्रसिद्धः विशेषतया तन्त्रग्रन्थेषु एतदतिरिक्तं कश्चनऽन्योऽर्थः प्रसिद्धः। रचयित्रा इदम्प्रथमतया यत्पुस्तकं विरचितम् तस्य मातृकेति सञ्ज्ञा भवति, यतो हि तत्पुस्तकं स्वप्रतिलिपिरूपेण लिखितपुस्तकानां मातेव भवति। प्रतिलिपिपुस्तकानामपि 'मातृका'- शब्देनाऽभिधानं भवति, यतो हि प्रतिलिपिपुस्तकानामपि प्रतिलिपयो भवन्ति। एवं प्रचलति प्रतिलिपि -परम्परा। सर्वथा समीचीनार्थगर्भितोऽयं मातृका-शब्दः।

अद्यत्वे 'हस्तलेख' इति शब्दः सर्वत्र प्रयुक्तः प्रसिद्धः चाऽवलोक्यते। शब्दोऽयं 'मैन्यू -स्क्रिप्ट' शब्दस्य यथार्थभाषान्तरणरूपः। इति ऑक्सफोर्डकोषः एतदनुसारं मैन्यू शब्दार्थ 'हस्तेन' इति स्क्रिप्ट शब्दार्थः 'लेख' इति। एवं 'हस्तलेख' इति शोभनतरं संस्कृतभाषान्तरणं 'मैन्यूस्किप्ट' शब्दस्य।

एतेषु सर्वेष्वपि विवेचितेषु शब्देषु मातृकाहस्तलेखशब्दौ सुतरां सार्थकौ प्रतिभातः, हस्तलिखितग्रन्थेष्वेवैतत्प्रयोगसम्भवात्। एतस्मिन्नेवार्थे कोश- शब्दोऽपि तेषु-तेषु ग्रन्थेषु बहुत्र प्रयुक्त उपलभ्यते।

**पाण्डुलिपिः-** एवमेव लिपि शब्दोऽप्यस्ति विचारणीयः प्रतिलिपिः पाण्डुलिपि-हस्तलिप्यादि- शब्देषु लिपि शब्दस्य प्राधान्यदर्शनात् लिप्यधीनत्वाच्च सर्वस्यापि लिखितवाग्व्यवहारस्य। वेदार्थकश्रुति शब्दस्य व्यवहारं दृष्ट्वा सर्वमप्यध्य-यनादिव्यवहारो मौखिलकरूपेणैव तदानीं प्रचलतिस्म। भारतीया लेखनाऽनभिज्ञा आसन् पाश्चात्याक्रमणानन्तरं तैर्लेखनमधिगतम् , इत्येतादृशीं भ्रान्तिं परिकल्पितवन्तः केचित् पाश्चात्या विद्वांसः। 'अलबेरूनी' त्वेवं प्रतिपादयति यत् पराशरपुत्रस्य व्यासस्य प्रेरणया भारतीयाः सहस्राधिकवर्षेभ्यो विस्मृतां लेखनकलां पुनरधिगतवन्तः इति। किन्तु सर्वा अप्येताः परिकल्पना भ्रान्तिविजृम्भितमेव।

को वा भाषास्वरूपाभिज्ञो विद्वान् च जानाति यत् लिखितभाषाया एवं व्याकरणं भवति। न क्वचिदप्यलिखितभाषाया व्याकरणमुपलभ्यते। वैदिकसंहिता-स्वेवैन्द्रादिव्याकरणसद्भावोल्लेखदर्शनात् (तैत्तिरीयसंहिता ६.४.७.)। वैदिकवाङ्मयं न केवलं छन्दोमयम् , एतेषां छन्दसां तत्र नामपरिगणनमपि कृतमुपलभ्यते। अलिखितभाषायां किं विकसितच्छन्दः शास्त्रस्य कल्पनापि भवितुं शक्नोति। वैदिकसंहिता स्वेव लिख्धातोः प्रयोगाऽप्यनेकत्र दरीदृश्यते। एवं निश्चिरूपेणैतद् वक्तुं शक्यते यत्

प्राचीनकाले भारते लेखनकला सुपरिचिता आसीत् , लिपिप्रयोगश्च भवति स्म।

अद्यत्वे पाण्डुलिपिशब्दः स्वाऽभिप्रेतार्थे प्रसिद्धतरः। यद्यपि शब्दस्यऽस्याऽस्ति सौष्ठवदृष्ट्या काऽपि स्वकीयैव सीमा, तथापि 'रूढिः शास्त्राद् बलीयसी' इति न्यायाद् पाण्डुलिपि शब्दोऽन्यशब्दापेक्षया समीचीन एव को वा न जानाति यत् प्राचीनं सर्वमपि ज्ञानविज्ञानम् एतास्वेव पाण्डुलिपिषु निहितमस्ति। अतो यद्येतस्य बहुमूल्यस्य ज्ञानविज्ञानस्य स्वैहिकाऽऽमुष्मिकोन्नत्यै सर्वात्मविकासाय चोपयोग इष्टोऽस्त्यस्माकं तर्हि सर्वथा संरक्षणायैतासां सचेष्टैर्भ भवितव्यमस्माभिः। साम्प्रतं वैज्ञानिकदृष्ट्या पाण्डुलिपिसंरक्षणाय बह्व्यः संस्थाः सर्वात्मना समर्पिता सन्ति। तासां संस्थानां साहाय्यमपि अव श्यमवाप्तव्यम् ।

यदि संरक्षिताः पाण्डुलिपयः ग्रन्थागारमात्रशरणा विराजन्ते, तर्हि तासां सद्भावमात्रेणाऽपि न कोऽपिदृष्टिपथमुपयाति। अतो दुर्लभानाम् अप्रकाशितानां पाण्डुलिपीनां पाठालोचनपूर्वकं सम्पादनं भवति महत्त्वपूर्ण कार्यम् । सम्पादनं नाम महती विशिष्टा च प्रक्रिया। दुर्लभग्रन्थस्य पाण्डुलिपीनां सहाय्येन यथासम्भवं तेनैव रूपेण प्रस्तुतीकरणं यद्रूपं ग्रन्थकारस्येष्टं भवेत् ।

एतदवश्यमनुसन्धेयं सम्पादनकलाधुरन्धरेणापि विदुषा तस्यैव ग्रन्थस्य सम्पादनायोपक्रमणीयं यस्य ग्रन्थस्य विषयवस्तु सम्यक् परिज्ञातं भवेत् , ग्रन्थमहिमानं तद् वैलक्षणयञ्च वीक्ष्य सद्य त्वरया सम्पादनकर्मणि न प्रवर्तनीयम् ।

सम्पादनमस्ति स्वयमेव कश्चन विशिष्टो विषयः विस्तरभिया स विशिष्टावसर एव निपुणमुपपादयितुमर्हः। तथापि महाभारतटीकारस्य नीलकण्ठचतुर्धरस्याऽयं श्लोकः सम्पादनकर्मणि प्रवृत्तानां मार्गदर्शनं कर्तुं सुतरां क्षमः-

**बहून् समाहृत्य विभिन्नदेश्यान्**
**कोशान् विनिश्चित्य च पाठमग्र्यम् ।**
**प्राचां गुरूणामनुसृत्य वाचम्**
**आरभ्यते भारतभावदीपः।।**

अन्ते त्वेतदेव विनिवेद्य स्वमन्तव्यमुपसंहरामि-

**रक्ष्यं स्वधर्मभावेन पाण्डुलिप्यात्मकं धनम्**
**राष्ट्रियं न्यासभूतं तु दुःखं न्यासस्य रक्षणम् ।।**



# धर्मशास्त्रे विज्ञानसम्मता नवसम्भावनाः

प्रो. ललितकुमारसाहुः,
धर्मशास्त्रविभागाध्यक्षः

भारतीयसाहित्यजगति वैदिकसाहित्यं प्रथमं साहित्यमिति प्रायशः सर्वैः विद्वद्भिः मुक्तकण्ठेन स्वीक्रियते। वैदिकसाहित्यानन्तरं तत्प्रतिपादिता विषयाः सरलतया सर्वविधेषु धर्मशास्त्रीयग्रन्थेषु पर्य्यालोचिता अदृश्यन्त। धर्मशास्त्रसाहित्यमपि मुख्यतया त्रेधा विभक्तम् । तत्र प्रतिपाद्यविषयेषु यद्यपि मुख्यतया आचार-व्यवहार-प्रायश्चित्तविषया दृष्टिपथमायान्ति, तथाप्यन्ये केचन विषया अपि विवेचिताः सन्ति। ते च संस्कार-आश्रम-श्राद्ध-शुद्धि-नीति-दानोत्सर्ग-पूजा-प्रतिष्ठाप्रभृतयो विवेचिता अवलोक्यन्ते।

प्राचीनमुनि-ऋषि-आचार्या आध्यात्मिकदृष्ट्या महान्तो विवेचिताः। तैः प्रतिक्षेत्रं विज्ञानं धर्मेण सह संयोजितम्। विज्ञानस्य साहाय्येन मनुष्यः संसारस्य महत्तममुपयोगमुपभोगञ्च कर्तुं समर्थो भवति। मानवसंस्कृतेरादिकालादेव नित्यमेतेषां प्रगत्या सह मानवस्य भोगविलासादीनां परिधिः सुविस्तृताऽभूत् । प्रथमं तावत् सर्वेषां महर्षीणां चिरजीवनस्याकांक्षाऽत्युत्कटा प्रतिभाति। अर्थशास्त्रे बहुविधद्रव्याणां समुपयोगेन अद्भुतकार्यप्रसाधनानि वस्तूनि निर्मातुमुपाया वर्त्तन्ते। येन भारतीयधर्मप्राणसमाजो धर्मनाम्नि वैज्ञानिकसिद्धान्तान् स्वीकृत्य समयानुसारं व्यवहृत्य चोपकृतो भवति। अतो निगदितुं शक्यते धर्म एव परोक्षेण विज्ञानमिति। अतो धर्मो विज्ञानञ्चोभे उभयोः परिपूरके।

भारते सांस्कृतिकव्यवस्थाः कदापि नैव प्राचीनाः नाप्यतिरञ्जिताः सृष्टाः। अस्माकं पूजापार्वणैः सह या व्यवस्थाः सुरक्षिताः, ताः केवलं निरर्थकधर्मधारणया नैव सृष्टाः। अपरञ्च तेषां पश्चात्तिष्ठति एकैकं बलिष्ठं वैज्ञानिकं शरीरतत्त्वम् ।

पूजा, पार्वणं, संस्कृतिः परम्परा चैतत् सर्वम् अस्ति हिन्दुधर्मस्य वैशिष्ट्यम् । एतद्व्यतिरेकेण सनातनधर्मस्य परिकल्पनमपि नैव सम्भवपरम् । प्रातः सायं यावत्प्रतिकृतकर्मबन्धितमनेन साकम् । तथैव मानवस्य आचारः विचारः, व्यवहारः, परिधानं, खाद्यं, पेयमित्थं शयनशैलिरपि सम्बन्धिता अनया संस्कृत्या परम्परया च

सार्द्धम् । मानवं सभ्यं संस्कृतं शृङ्खलितञ्च कर्त्तुं तानि सर्वाणि संयोजितानि धर्मेण पूजया परम्परया च। अवश्यं समयानुसारं हिन्दुधर्मस्य व्यवस्थाः कठोरा इत्यभिहिताः। पुनश्च आधुनिकताया अनुकरणेन ताः प्राचीनाः कथिताः। परन्तु सुप्राचीनकालादारभ्य सृष्टाः सांस्कृतिकव्यवस्था न कदापि पुरातना आसन् नाप्यतिरञ्जिततया सृष्टाः। अस्माकं पार्वणेन च सह या व्यवस्थाः संरक्षिताः, ताभिः मानवः सुस्थः तिष्ठति। पुनश्च समाजः शृङ्खलितो भवति सभ्यतायाश्च विकाससाधनं भवति।

**१. हस्तमेलनपूर्वकनमस्कारस्य वैज्ञानिकाधारः-**

हिन्दुधर्मे अतिथीनामभ्यागतानाञ्च स्वागतपरम्परा अतीव प्रचीना। पूजापार्वणेषु घटनेयं बाहुल्येन दृश्यते। पूजापार्वणेषु अतिथयो गृहमागच्छन्ति। किञ्च तेषामागमनात्पूर्वं प्रारभ्यते तेषां स्वागतसम्भाषणपर्व। स्वागतपरम्परेयं आरभ्यते हस्तौ मिश्रयित्वा नमस्कारप्रक्रियायाः। हिन्दुधर्मस्य व्यवस्थानुसारं अतिथेः दर्शनमात्रेण करतलौ पीडयित्वा नमस्क्रियते। प्रक्रियेयं साधरणेति प्रायशो मन्यते। परन्तु इयं प्रक्रिया सामान्या न भवति। अनने कर्मणा न केवलमतिथीनां सम्माननं क्रियते, अपि तु अनेन अस्माकं शारीरिकशक्तौ अभिवृद्धिः भवति। संक्षेपेण वक्तुं शक्यते यदस्य नमस्कारस्य पश्चात्तिष्ठति बहुगुरुत्वपूर्णवैज्ञानिकं कारणम् ।

वैज्ञानिकतथ्यानुसारं दौ करतलौ एकत्र निपीड्य नमस्कारेण अङ्गुल्यग्रभागाः परस्परं निपीडिताः तिष्ठन्ति। पुनश्च अङ्गुल्यग्रभागैः सहास्माकं अक्ष्णोः मस्तिष्कस्य च स्नायवः सम्बन्धिताः तिष्ठन्ति। अङ्गुल्यग्रभागैः सह अङ्गुल्यग्रभागानां पीडनेन स्नायवः सक्रियाः भवन्ति, शरीरे शक्तिः सृज्यते। एष नमस्कारः चक्षुसी कर्णौ मस्तिष्कं च सतेजः रक्षति तथा तेषां क्रियाशीलतां वर्द्धयति। अतः नमस्कारेण न केवलं वयमन्यान् सम्मानं प्रदर्शयामोऽपि तु वयम् अस्माकं शारीरिकं सामर्थ्यमपि संवर्धयामः।

**२. हस्तयोः मञ्जिष्ठाधारणस्य वैज्ञानिकाधारः-**

हिन्दुधर्मे शुभकर्म-विवाहव्रत-पूजा-पार्वणानामभावो नास्ति। किञ्च एषु शुभकर्मसु कन्यकानां मञ्जिष्ठाव्यवहार एका सुपरिचिता घटना। घटनेयं जनैः सामान्यतया गृह्यते। इत्थं कन्यका अपि कर्मेदं शुभकमर्णः अंशत्वेन चिन्तयन्ति। परन्तु आगतासु पूजासु आगतेषु च पार्वणेषु किमर्थमित्थं क्रियते? न केनापि विचार्यते। एतदनु स्थितं विज्ञानं प्रशंसनीयं स्वास्थ्यसंबन्धितं चाप्यस्ति। तथ्यानुसारं मञ्जिष्ठा इत्थमेकः पदार्थः, यस्मिन् पीडानिरोधकशक्तिः पूर्णतया तिष्ठति। इत्थमियं मञ्जिष्ठा शिररोगतः दुश्चिन्तायाः पीडाया अपि मुक्तिं ददाति। स्नायुविज्ञानतथ्यानुसारमस्माकं करतलः भवति सर्वाधिकस्नायुग्रन्थानां मिलनस्थलम् । करतले मञ्जिष्ठाव्यवहारेण अस्माकं स्नायुग्रन्थयः

तेजियांसो भवन्ति। यैश्च अन्तर्पीडाशिररोगादयो ह्रसन्ति। पुनश्च शरीरतापमात्रां न्यूनीकृत्य नियन्त्रणपूर्वकं शरीराय शीतलतां प्रददाति। फलतः अस्मभ्यं मानसिकी शक्तिः मिलति।

**३. पादयोः पादाङ्गुलमुद्रिकापरिधानं विज्ञानसम्मतम् -**

हिन्दुधर्मस्य सर्वविधकर्मसु विवाहितानां नारीणां विशेषतया गुरुत्वपूर्णा भूमिका तिष्ठति। सधवानारीणां सर्वातिशायि लक्षणं भवति पादाङ्गुलमुद्रिकापरिधानम् । पादाङ्गुलमुद्रिकापरिधानं साधारणभावेन अलङ्कारत्वेन विविच्यते। साधारणदृष्ट्या एतत्कर्म नार्य्याः सौन्दर्यवृद्धेः उपादानमेकं भवेत् । परन्तु विज्ञानमेतस्य भिन्नां महत्त्वपूर्णां दिशं प्रदर्शयति। सधवाः साधारणतया पादद्वितीयाङ्गुल्यां पादाङ्गुलमुद्रिकां धारयन्तीति परम्परा तिष्ठति। विज्ञानस्य तथ्यानुसारं, नारीणां पादयोः द्वितीयाङ्गुल्यां निर्दिष्टप्रकारकः स्नायुग्रन्थः तिष्ठति, यश्च गर्भाशयं (Uterus) संयुज्य हृत्पिण्डेन मिलति। पादाङ्गुलमुद्रिका साधारणतः रौप्येण निर्मियते। रौप्यं भवति शक्तेः एक सुपरिवाहि वस्तु। किञ्च रौप्यं एव भूपृष्ठस्य क्रान्तीयशक्तिं (Polar energy) सरलतया गृह्णाति। नारीणां रौप्यपादाङ्गुलमुद्रिका भूपृष्ठक्रान्तीयशक्तिं गृहीत्वा तां शरीरस्यान्तः प्रवेशयति। द्वितीयाङ्गुल्यां स्थितः स्नायुः तां शक्तिं साक्षात् गर्भाशयमाध्यमेन हृत्पिण्डं प्रेरयति। फलतः नारीणां शरीरेषु विशेषप्रकारस्य ऊर्जा सृज्यते, या गर्भाशयस्याधिग्रहणक्षमतां वर्द्धयति हृत्पिण्डस्य च शक्तिं सन्तुलयति। तथैव, भूपृष्ठस्य क्रान्तीयशक्त्या नारीणां ऋतुचक्रे नियमिततां रक्षति।

**४. कपाले तिलकचन्दनकुङ्कुमधारणं विज्ञानसम्मतम् -**

कपाले तिलकधारणं हिन्दुधर्मस्य एका सुप्राचीना व्यवस्था। नार्य्यः यदा कपाले कुङ्कुमं धारयन्ति तदा पुरुषाः चन्दनेन अथवा सिन्दूरेण रेखाङ्कनं कुर्वन्ति। हिन्दुधर्मस्य सांस्कृतिकव्यवस्थया प्रत्येकं हिन्दुः प्रतिदिनं ललाटे तिलकं धारयेत् । एतत्कश्चित् स्वीकरोतु न वा, परन्तु पूजापार्वणसमये प्रत्येकं जनोऽवश्यं तिलकं धारयति। नैतत्केवलं सास्कृतिकः सामाजिको वा विधिरस्ति, अस्य पश्चात्तिष्ठति विशेषं वैज्ञानिकं कारणम् । तिलकं साधरणतया भ्रुवोः मध्यभागे धार्यते। वैज्ञानिकतथ्यानुसारं द्वयोः भ्रुवोः मध्यभागः भवति स्नायुग्रन्थीनां मिलनस्थलम् । अनेन रक्तनालिकायाः हृत्पिण्डस्य च संपृक्तिरस्ति। पुनश्च अध्यात्मविज्ञानानुसारं, भ्रुवोः मध्यभागे तिष्ठति गुरुत्वपूर्णम् आज्ञाचक्रम् । आज्ञाचक्रे देवदेवस्य महादेवस्यावस्थानम् , अनेन चक्रेण सह मस्तिष्कस्य एकाग्रता-शारीरिकपीडादयः संपृक्ताः। शरीरविज्ञानमपि तदेव वदति। अन्यत्तथ्यानुसारं चन्दनकुङ्कुमधारणेन भ्रुवोर्मध्यभागे स्थितमाज्ञाचक्रं ग्रन्थिश्चोभौ सक्रियौ भवतः। एतयोः धारणेन व्यक्तेः एकाग्रताशक्तिः वर्धते। शरीरपीडा (चापः) नियन्त्रिता भवति। तथैव रक्तचापः संतुलितः सन् मुखसौन्दर्यमपि वर्धयति। सुप्राचीन-

कालाच्चन्दनकुङ्कुमधारणयोर्विधिः प्रचलति।

५. भोजनान्ते मिष्टान्नभोजनं विज्ञानसम्मतम् -

भारतवर्षमस्माकं पूजापर्वणां देशः। अत्र प्रायशः प्रतिग्रामं प्रतिगृहं महोत्सवः। सर्वत्र परिलक्ष्यते पिष्टकमिष्टान्नानां रङ्गभूमिः। गृहं बन्धुजनाकीर्णं भवति। विभिन्नानां खाद्यानां प्रस्तुतिः प्रचलति। खाद्यपदार्थानां प्रबलसौरभेण गृहाणि सुगन्धयुक्तनि भवन्ति। खाद्येन साकं पूजापर्वणां विशेषः संयोगः विद्यते। संभोजन्यां बहुविधेषु खाद्येषु व्यञ्जनेषु च प्रस्तुतेषु अपि भोजनान्ते यदि मिष्टं न खादितं तर्हि तेन भोजनेन किम् ? व्यवस्थेयं नैव अद्यतनीया। कस्मादपि सुप्राचीनकालात् अस्माकं पूर्वजाः कर्मैतत्कुर्वाणा आसन्, भोजनान्ते मिष्टान्नभोजनमत्यन्तमनिवार्य्यम् । तर्हि व्यवस्थेयं सामान्या खाद्यव्यवस्थेति नैव चिन्तनीयम् । एतदनुतिष्ठति एकं वैज्ञानिकं कारणं, यदेवास्माकं स्वास्थ्यसम्बन्धितम्। साधारणतया पूजासु पार्वणेषु च उत्कृष्टं स्वादिष्टं च व्यञ्जनं प्रस्तूयते। तदर्थमत्यधिकतैलोपस्करादीनां व्यवहारः क्रियते। वैज्ञानिकतथ्यानुसारं तैलाक्तखाद्यं शरीरेऽस्माकं पाचनशक्तिं प्राचुर्येण वर्धयति। येन पाचकरसः आधिक्येन क्षरितो भवति। न केवलं पाचकरसः अपि तु अनने हानिकारकमम्लमपि क्षरति शरीरम् , यदेव शरीराय क्षतिकारकं भवति। तस्मै शरीराय मिष्टान्नम् उपकारकं प्रमाणितम् । मिष्टान्ने विद्यमानशर्करा (श्वेतसारः) अनावश्यकाम्लशक्तिं न्यूनीकरोति। तदर्थं भोजनानन्तरमवश्यमेव मिष्टमेकं भोजयेदिति।

६. सिन्दूरधारणं विज्ञानसम्मतम् -

विशेषतया सिन्दूरं विवाहितानां नारीणामलंकारविशेषमस्ति। सिन्दूरं विहाय भारतीयनारीणां परिकल्पनं नैव क्रियते। विवाहेन सह सिन्दूरं संयोजितं चातुर्य्येण भारतीयसंस्कृतौ। सिन्दूरस्थो धातवपदार्थः आधिक्येन लाभदायको भवति नारीणाम् । विवाहानान्तरं प्रथमतो नार्य्यो विभिन्नाभिः समस्याभिः संश्लिष्टाः भवन्ति। फलतः ताः प्रायशो मानसिकपीडाग्रस्ताः भवन्ति। द्वितीयं कारणं, विवाहानान्तरं ताः सन्तानान् उत्पादयन्ति। भारतीयसंस्कृतौ विचारितं सिन्दूरं अतीवसुन्दरतया भारतीयनार्य्या अनयोः द्वयोः भूमिकयोः सहायकं विवेचितम् । साधारणतः नार्य्यः ललाटे सिन्दूरं धारयन्ति। वैज्ञानिकतथ्यानुसारं सीमन्तस्थस्नायुकोषः साक्षात् पिट्युटारीग्रन्थिना सह संयुक्तः। नारीमध्ये सृष्टा मानसिकी पीडा सिन्दूरप्रभावेण प्रशमिता भवति। एतत् सिन्दूरं नारीमध्यप्रजननसामर्थ्यं त्वरान्वितं करोति। एतदर्थं विधवा अविवाहिताश्च कन्यकाः

सिन्दूरान्निषिध्यन्ते।

**७. मन्दिरेषु घण्टावाद्यं विज्ञानसम्मतम् -**

पूजासमये मन्दिरगमनम् अनिवार्य्यम् । पार्वणतौं देवीमन्दिरे सदैव जनसम्मर्दः परिलक्ष्यते। तर्हि मन्दिरेषु अवश्यमेव यदेव कार्यं सर्वैः क्रियते, तदेव घण्टावादनम्। अतः अभ्यासतया मन्दिरं गत्वा घण्टां ताडयामः। किञ्च तदेव घण्टावादनं अस्माभिरस्माकं धर्मव्यवस्थायाम् अंशत्वेन गृहीतम् । परन्तु एतदनु तिष्ठति कारणम्, इदमेव कारणमस्माकं मानसिकतया सह व्यावृतम् । मन्दिरस्य गर्भगृहे तिष्ठति घण्टा। तत्रत्याया घण्टायाः निर्माणपद्धतिः स्वतन्त्रा। शास्त्रानुसारं घण्टाताडनेन बहिस्था दुष्टशक्तयः घण्टाशब्देन दूरमपसरन्ति। तथैव शास्त्रान्तरानुसारं घण्टावादनेन ईश्वरः प्रीणाति। ततः एतदनु स्थितं कारणमस्ति-घण्टावादनेन मानसिकी शान्तिः सृज्यते। तथ्यानुसारं घण्टायाः प्रकम्पनं मस्तिष्कस्योभयोः पार्श्वयोः सप्तनिमेषान् यावत्तिष्ठति। एतत्तीक्ष्णं कम्पनं मस्तिष्कस्य सप्तोपशमकेन्द्राणि जागर्ति। फलतः पञ्चेन्द्रियाणि सक्रियाणि भवन्ति। अनेन मस्तिष्कस्य नकारात्मकचिन्ताधारायाः विनाशो घटते। अस्मासु क्रमशः सकारात्मकचिन्ताधारा उत्पद्यते। अस्मभ्यं मानसिकी शान्तिर्मिलति।

**८. पंक्तिभोजनं विज्ञानसम्मतम् -**

साम्प्रतं प्रायशः पङ्क्तिभोजनं नैव परिलक्ष्यते। कारणं समयस्य परिवर्त्तनेन सह मानसिकतायामति परिवर्तनं संजातम् । तथापि पूजापार्वणेषु नैकेषु स्थानेषु पङ्क्तिभोजनस्यार्थो भवति एकत्र नीच्यैः पद्मासनपूर्वकं भोजनम् । पुरा भोजनमेतत् बाध्यतामूलकमासीत् । लोका भूतलेऽर्धपद्मासनेन भोजनं कृतवन्तः। इदानीं तदेव प्राचीनव्यवस्थेति उच्यते, सत्यं परन्तु तत्पश्चात् स्थितं भौतिकं विज्ञानम् अनेनावहेलितम्। एतदनु स्थितं कारणमस्माकं शरीरेभ्यः अत्यन्तं गुरुत्वपूर्णम् । अध उषित्वा पद्मासनेन भोजनं योगभाषायां सुखासनम् इत्युच्यते। तथैव अस्माकं पाकस्थलेः स्थितिः उत्तमखाद्यग्रहणावस्थायां तिष्ठति। अनेन व्यतिरेकेण, सरलतया उपवेशनेन अस्माकं मस्तिष्कं सक्रियं भवति। एतस्य सर्वस्य समाहारेण शरीरे हार्मोनक्षरणं सन्तुलितं भवति। फलतः खाद्यपाचने असौविध्यं न भवति।

**९. व्रतोपवासयोः धार्मिकभावनायां वैज्ञानिकदृष्टिकोणः-**

व्रतमुपवासश्च यदा मनुष्यस्य स्वास्थ्यं प्रति श्रद्धाभावं जनयतः, तदा

वैज्ञानिकाधारो भवति यच्छरीरे चयापचायौ सुव्यवस्थापयितुं शारीरिकस्वस्थाय चानयोः व्रतोपवासयोरावश्यकता अस्ति। साम्प्रतं व्रतं आडम्बरत्वेन गृहीतम् । वस्तुतो निरन्तरभोजनेन स्थूलता आयाति, सा चैकः रोगः। व्रतेनोपवासेन वा अस्माद्रोगादुपशमो मिलति। अतः अनयोः चिकित्सकीयो वैज्ञानिकश्चाधारौ विद्येते।

**१०. केषुचिद्धार्मिकानुष्ठानेषु गोमूत्रसेवनस्य आचमनस्य वा विज्ञानसिद्धप्रावधानम् -**

गोमूत्रं गोमयञ्चोभयं भारतीयार्थव्यवस्थायां महत्त्वपूर्णस्थानं बिभर्ति। गोमयेन प्राङ्गणलेपनेन तद्विषाणुरहितं भवति। तेन च भोजननिर्माणेन भोजनं स्वादिष्टं सुपाच्यं च भवति। खाद्यप्रस्तुतसमये निर्गतेन धूमेन मक्षिकाः, मशकाः, दंशा दूरं पलायन्ते। एतत् वातावरणं प्रदूषणरहितं करोति।

गोमूत्रं केषांचिदसाध्यरोगाणां कर्कट-यकृत् - चर्मरोगाणां उपचाराय सुमहद्गुणकारि अस्ति। अतो गोमूत्रसेवनमाचमनं वा वैज्ञानिकदृष्ट्या महत्त्वपूर्णम् ।

**११. भोजनविधाने वैज्ञानिकचिन्ताधारा-**

हिन्दूधर्मे भोजनाय काश्चन धार्मिकरीतयः निगदिताः। यथा विना स्नानं भोजनं विष्ठासमं विचारितम् । स्नानेन लोमकूपाः परिष्क्रियन्ते। शरीरं स्वच्छं निर्मलञ्च भवति तथा अतिशयक्षुधा भवति। भोजनात्पूर्वं मन्त्रपठनेन तथा भूतवैश्वदेवबलिना, अनन्दातारं भगवन्तं च प्रति धन्यवादार्पणेन मनः शान्तं भवति। भोजनकाले मौनपूर्वकं एकाग्रचित्तेन भोजनेन खाद्यं यथार्थरीत्या पचति तथा अङ्गानि उपाङ्गानि च पोषयित्वा अस्मान् बलिष्ठं करोति। इत्थं भोजनेन मानवः शतायुर्भवति तथा निरामयजीवनं यापयति।

साम्प्रतं जीवने भोजनाय समयो न प्राप्यते। राक्षसमिव भक्ष्याभक्ष्यविचारं विना खाद्यं खाद्यते। अतोऽद्यतनसमाजे ९९ नवनवतिप्रतिशतं जनाः गैस् - अपच-अतिसार-रक्तचाप-मधुमेह-हृदय-रोगैः पीडिताः। यदि धार्मिकरीत्या भोजनं क्रियते तर्हि रोगेभ्यः मुक्तिः सम्भवेत् । कारणं धार्मिकग्रन्थेषु भोजनरीतिः सम्पूर्णतया वैज्ञानिकी। अनेन सर्वेषां विश्वासो भवति यत् भारतीय-धर्मशास्त्रकारैः केन प्रकारेण विज्ञानधर्मेण लोकहिताय सम्मिलितम् ।

**१२. ब्राह्ममुहूर्त्ते जागरणं विज्ञानसम्मतम् -**

धर्मशास्त्राणि उपदिशन्ति यद् ब्राह्ममुहूर्ते अर्थात् प्रातः चतुर्वादनवेलायां उज्जागरेण (शय्यात्यागेन) स्वास्थ्यस्य, सौन्दर्यस्य, विद्यायाः बलस्य च प्राप्तिः भवति। वस्तुतः एतत्पूर्णतया वैज्ञानिकं सत्यम् । प्रातः ब्राह्ममुहूर्ते वायुमण्डलं पूर्णतया शुद्धं तिष्ठति। अस्मिन् समये विषयुक्तवाष्पाः, पांशुः, धूमः तथा प्रदूषकतत्त्वानि

पृथिव्याम् आकाशं गत्वा मेघैः सह सम्मिलितानि भवन्ति। अतः समयेऽस्मिन् प्रचलितेन वायुना मनः, मस्तिष्कं शरीरञ्च परिशुद्धं भवति। पुरातनमलापगमनेनोदरं परिष्कृतं भवति। येन मानवः समग्रं दिनं प्रतिनवम् अनुभवति। तदा उदरस्थं मलं परिष्कृतं भवति, यद्द्वारा शरीरं कान्तिमयं स्वस्थं च भवति। तदा वातावरणं सामग्रिकभावेन शान्तं शीतलञ्च तिष्ठति। अतो मानवो यत्किमपि पठति, एकाग्रतया तदैव स्मृतौ एधते। एवं विद्याया बुद्धेश्च विकाशो भवति। तस्माद्धार्मिकदृष्ट्या ब्राह्ममुहूर्ते जागरणमनिवार्यम् । यदि कश्चिद्वारमेकं ब्राह्ममुहूर्ते उत्थितुमारभते तर्हि तस्य जीवनं परिवर्तते। यत् उक्तमस्ति "ब्राह्मे मुहूर्ते बुध्येत, धर्मार्थौ चानुचिन्तयेत् "। अर्थाद्धर्मार्थयोरुभयोः प्राप्तिः भवति।

**१३. सूर्यनमस्कारस्य वैज्ञानिकाधारः-**

सूर्यनमस्कारः सूर्याय जलदानञ्चोभयं धार्मिककार्यं सदपि विज्ञानसम्मतम् । एतच्च पूर्णतया वैज्ञानिकदृष्ट्या सिद्धं जातं यत् सूर्याय जलदानार्थं मनुष्यः साक्षात् सूर्यं प्रति मुखं कृत्वा दण्डायमानः सन् जलम् अर्पयति। अनेन सामान्यतया (विटामिन् ) खाद्यसारः डी (घ) मिलति, तेन सह चर्मरोगान्मुक्तिः मिलति तथा नेत्रज्योतिः वर्द्धते। प्रातः सायञ्च सूर्यकिरणेषु रोगाणुनाशकशक्तिः तिष्ठति, या कतिभ्यः रोगाणुभ्यो मनुष्यं रक्षति। अतः सूर्यनमस्कारस्य सूर्याय जलदानस्य च सुमहान् वैज्ञानिकाधारो विद्यते।

**१४. भोजनादनन्तरं पूर्वञ्च साक्षाज्जलपाननिषिद्धं विज्ञानसम्मतम् -**

भारतीयधर्मग्रन्थेषु भोजनात्पूर्वं परं वा साक्षाज्जलपानाय नैवोपदिष्टम् । तेन सह इदमप्युक्तं यदुष्णखाद्यग्रहणानन्तरं शीतलं खाद्यं पेयं वा नैव ग्राह्यम् । साम्प्रतं पाश्चात्यसभ्यतायाः प्रभावात् तावत्पर्यन्तं भोजनस्य पूर्तिः नैवास्ति यावत्पर्यन्तं आईस्क्रीम् न खाद्यते। परन्तु विज्ञानमेतस्य वैपरीत्यं वदति। भारतीयधर्मग्रन्थेषूक्तं यत् यदा अस्माभिः खाद्यं खाद्यते तदा गृहीतखाद्यं पक्तुं जठराग्निः नैकविधान् पदार्थान् स्रवति। सांप्रतिकवैज्ञानिका इमान् इन्जाईम्स कथयन्ति। खाद्यपचनाय एन्जाइमपदार्था यथानुपातं स्रवन्ते। यदि भोजनेन साकं जलं पीयते तर्हि एषां एन्जाईम-पदार्थानां गुणधर्माणां शैथिल्यात् दौर्बल्यात् च जठराग्निः शिथिलो भवति, येन पाचनप्रक्रियाऽपि शिथिला भवति। अनेन कारणेन पाचनसंबन्धिरोगाः यथा-गैस् - अपचन-अम्ल-क्षुधाहीनता-प्रभृतयो रोगा उत्पद्यन्ते अस्मात्सुस्पष्टम् , अस्माकं धार्मिकोपदेशानां आधाराः पूर्णतया वैज्ञानिकाः। इमे कल्पनाधारिता न सन्ति, अपि तु सुपरीक्षिताः सिद्धान्ताः विद्यन्ते।

**१५. मालाजपः वैज्ञानिकदृष्ट्या लाभप्रदः-**

मालाजपनमेकम् आध्यत्मिकं धार्मिकं वा कार्यं मन्यते। परन्तु एतत् "एक्युप्रेशर

थैरपी" इत्यस्य प्राचीनं रूपम् । एतस्य संपादनाय अङ्गुल्योर्मध्ये घर्षणमावश्यकम् । घर्षणमेतद् हृदयमस्तिष्कयोः स्वास्थ्याय बहूपयोगि। यदि एकाग्रतया माला जप्यते तर्हि तस्य बहुगुणित-प्रभाव उत्पद्यते। यो मानवस्य मनोमस्तिष्काभ्यां सुखदायको भवति। अनेन उच्चरक्तचापमधुमेहमानसिकचापैः सृष्टरोगेभ्यः सुरक्षा मिलति।

**१६. धार्मिकदृष्ट्या त्रिपुण्ड-चन्दन-तिलकधारणं विज्ञानसम्मतम् -**

धार्मिकदृष्ट्या चंदनस्य त्रिपुण्डस्य तिलकस्य वा व्यवहारपरम्परा अनिवार्या परिलक्ष्यते। भवान् यत्किमपि मन्दिरं गच्छतु तत्र तिलकधारणं सुनिश्चितम् । कदाचित् मतविशेषस्य द्योतनाय (परिचयाय) अपि त्रिपुंडं तिलकं वा धार्यते। एतैः तिलकादिभिः चिह्नैः जनः शैवः, वैष्णवः, नाथपंथी अघोरी वा ज्ञानं भवति। सम्प्रदायविशेषस्य कृते चिह्नविशेषो निर्द्धारितः। तिलकादीनां वैज्ञानिकाधार एक एव। मानवो यदा मस्तिष्कस्योपरि सामाजिकं बलं व्यवहरति। तदा शिरः पीडा, ललाटे उतापः, उत मस्तिष्कं भारयुक्तमनुभूयते। इमे रोगाः कथ्यन्ते। यदि अस्माभिः साधनया एकाग्रतया वा ध्यानं क्रियते तर्हि मस्तिष्कं विशेषस्थितौ तिष्ठति। यदा चन्दनादिकं व्यवह्रियते तदा मस्तिष्काय सुखं मिलति तथा शिरःपीडादिरोगेभ्यो मुक्तिर्मिलति। अतो मस्तिष्कोपरि चन्दनतिलकं मानसिकविश्रामाय शान्तये वा अत्यन्तमुपयोगि अस्ति। तिलकस्य अयमेव वैज्ञानिकाधारः।

**१७. गंगाजलस्य पवित्रतायां धार्मिकग्रन्थानां वैज्ञानिकाधारः-**

गंगाजलं पवित्रतमं मन्यते, प्रत्येकस्मिन् पवित्रकर्मणि गंगाजलस्य व्यवहार आचमनत्वेन सिञ्चनरूपेण वा दृश्यते। अस्य पवित्रताविषये धर्मग्रन्थेषु बहु किमपि लिखितं परन्तु वैज्ञानिकाधारोपरि स्वल्पं किमपि निगदितम् ।

वस्तुतो गंगा तस्या उद्गमादारभ्य यदा अग्रे सरति तदा स्वकीयया साकं नैकेषां खनिजपदार्थानां वनौषधीनाञ्च प्राकृतिकमिश्रणेन सह वहति। एतेषां खनिजवनौषधीनां प्रभावेण जलमेतद्विषाणुरहितं भवति तथा दीर्घदिनानि संरक्षणेऽपि कीटा नैव भवन्ति। अन्यज्जले दिनानन्तरं कीटाणवः परिलक्ष्यन्ते। परन्तु अधुनापि न केनाप्युक्तं, यद्गङ्गाजले कीटाणुर्दृष्ट इति। अनेकैः पाश्चात्यैः पेयं अनेकाभिः प्रक्रियाभिः सुरक्षितुं प्रयत्नः क्रियते। परन्तु तस्मिन्नपि कियद्दिवसानामनन्तरं कीटाणुः प्राप्यते। अतो गंगाजलं पूर्णतो वैज्ञानिकरीत्या सुरक्षितम् । अतोऽस्याचमनस्य सिञ्चनस्य च धार्मिकाधारः कथितः, कारणमेतद्वैज्ञानिकरीत्या संपूर्णतया सुरक्षितम् ।

**१८. धर्मग्रन्थेषु वर्णितमन्त्राणां वैज्ञानिकं चिन्तनम् -**

भारतवर्षे धर्मेण साकं ज्ञानस्य अनेकानि साधनानि यथा ज्योतिषं, कर्मकाण्डः,

मन्त्रः, तन्त्रं, माया, इन्द्रजालः, चमत्कारप्रदर्शनं, दर्शनं, तर्कः, मीमांसा, मनोविज्ञानं, परामनोविज्ञानं, भौतिकविज्ञानं, तरंगविज्ञानं, इलेक्ट्रोनिक्स, जीव-विज्ञानं, वनस्पतिविज्ञानं रसायनविज्ञानादीनि च सम्मिलितानि। एतानि वैज्ञानिक-संकल्पनानि प्राचीन-मुनि-ऋषिभिः मन्त्रबद्धानि कृतानि। तस्मात्प्रति मन्त्रं फलमपि भिन्नं भवति तथैवास्य प्रयोगोऽपि भिन्नो भवति। यदि मन्त्राणां यथार्थप्रयोग उतोच्चारणं क्रियते तर्दि तेषां फलानि तादृशानि भवन्ति। यथा विज्ञानं सत्यं तथैव मन्त्रोऽपि सत्यम् ।

इत्थं सत्सु अनेकेषु उदाहरणेषु कैश्चिदुदाहरणैः धर्मशास्त्रीयविज्ञानसम्मताः नवसम्भावनाः विश्वकल्याणाय प्रस्तुताः। तस्मात् उदीयमाना वैज्ञानिकाः शोधकर्त्तारश्च ज्ञानस्यास्य अपारनिधौ अवश्यमेव निमज्जेयुरिति।



# राजनीतिक-भ्रष्टाचार-निवारणे स्मार्तधर्मस्य शोधदृष्ट्या प्रासङ्गिकता

**प्रो० रामकृष्ण पाण्डेय 'परमहंस'**
आचार्य–धर्मशास्त्रविभाग

धर्मः अस्माकं भारतदेशस्य समाजस्य च प्राणभूतः इति नास्त्यविदितं विदुषाम् । समाजे स्थितानां समेषामपि जनानां कर्त्तव्याकर्तव्यबोधकः सोऽयं धर्मो मुख्यरूपेण द्विविधः निरूपितः – १. श्रौतधर्म : २. स्मार्तधर्मश्च। तत्र श्रुतिप्रतिपादिताः यागादयः श्रौतधर्मपदेन मनुयाज्ञवल्क्यादिस्मृतिनिरूपिताः धर्माः स्मार्त्तधर्मपदेन अभिधीयन्ते। अनयोः द्वितीयः स्मार्तधर्मः मन्वादिस्मृतिकारैः स्मृतः, अस्माकं विचारविषयः विमर्शविषयो वर्त्तते। याज्ञवल्क्यस्मृतेः प्रथमश्लोकव्याख्यानप्रसङ्गे टीकाकारः विज्ञानेश्वरः स्मार्तधर्मस्य षड्विधत्वं प्रतिपादयति। ते च स्मार्तधर्माः, यथा– १. वर्णधर्मः, २. आश्रमधर्मः, ३. वर्णाश्रमधर्मः ४. गुणधर्मः, ५. निमित्तधर्मः, ६. साधारणधर्मश्चेति। तत्र वर्णधर्मो 'ब्राह्मणो नित्यं मद्यं वर्जये' दित्यादिः। आश्रमधर्मोऽग्नीन्धनभैक्षचर्यादिः। वर्णाश्रमधर्मः पालाशे दण्डो ब्राह्मणस्येत्येवमादिः। गुणधर्मः शास्त्रीयाभिषेकादिगुणयुक्तस्य क्षत्रियविशेषस्य राज्ञः प्रजापरिपालनादि भवति परमोधर्मः। निमित्तधर्मो विहिताकरणप्रतिसिद्धसेवननिमित्तं प्रायश्चित्तम् । साधारण–धर्मोऽहिंसादिः, यथा– " न हिंस्यात्सर्व भूतानि" इत्याचाण्डालं साधारणोधर्मः।

मनुटीकाकारेण कुल्लूकभट्टेन, गौतमधर्मसूत्रस्य मिताक्षराटीकाकारेण हरदत्तेन च स्मार्तधर्मस्य पञ्चविधत्वं समुपवर्णितम् ।

अतिप्राचीनकालादेव धर्मप्रधाने अध्यात्मप्रधाने च अस्माकं भारतीयसमाजे अस्य स्मार्तधर्मस्य परिपालनं विधीयते। स्मार्तधर्मपरिपालनेनैव अस्माकं देशः समाजश्च नितान्तं सुव्यवस्थितः, सम्पन्नः, पूज्यः, सर्वेषाम् आदर्शभूतश्च आसीत् । किन्तु वैदेशिकानाम् आक्रमणानन्तरं पाश्चात्यधर्मस्य संस्कृतेश्च प्रभावात् नितान्तं भोगवादस्य, भौतिकवादस्य, शरीरसुखवादस्य च आधुनिकभारतीयसमाजे प्रवेशो जातः। श्रुति–

स्मृति–सदाचाराधृते स्मार्तधर्मानुशासिते प्राचीनभारतीयसमाजे अहिंसा–सत्यास्तेय – क्षमा– त्याग–योग–दया–सेवा–तपस्यापरिग्रहादि मानवगुणानां प्राधान्यात् सर्वत्र शान्तिः, सुखं सुव्यवस्था चासीत् । स्मार्तधर्म–परिपालकाः समेऽपि जनाः, वर्णाः, आश्रमाश्च पारस्परिकं वैरभावं द्वेषभावञ्च विहाय संभूय राष्ट्रस्य, समाजस्य, समग्रविश्वस्य च विकासाय प्रयतमानाः आसन् । का कथा नराणां, देवा अपिअस्माकं पुण्यभूमौ भारतवर्षे जन्मलाभाय व्यग्राः आसन् ।

लार्ड मैकाले– प्रचालितपाश्चतत्यशिक्षापद्धतेः दुष्प्रभावेण प्राचीनसंस्कृतेः संस्कृतभाषायाश्च मूलोच्छेदात् स्मार्तधर्मोपेक्षणाच्च अद्यास्माकं समाजः परितः हिंसानृतद्वेषेर्ष्याद्रोहादि– दुर्गुणैराक्रान्तः अनुदिनं विनाशपथारूढो विलोक्यते। अद्य नैतिक–राजनैतिक–आर्थिक –पारिवारिक–सामाजिक–भ्रष्टाचारस्य आतङ्कवादस्य च नग्ननृत्यं न केवलं भारते अपितुं निखिलेऽपि विश्वे दृष्टिपथमायाति।
आभिः विषमसमस्याभिराक्रान्तस्य समाजस्य राष्ट्रस्य च रक्षा कथं भवेदिति अस्माकं कृते सर्वथा चिन्तनीयोऽयं विषयः।

मन्वादिस्मृतिकारैर्निरूपितस्य स्मार्तधर्मस्य बहुकालादुपेक्षितस्य पुनराश्रयणेन, परिपालनेनैव अस्माकं देशः निजं प्राचीनं गौरवं 'विश्वगुरुपदं' च प्राप्स्यतीति मदीयो दृढो विश्वासः। तदस्मिन् प्रबन्धे केवलं राजनैतिकभ्रष्टाचारस्य निवारणे स्मार्तधर्मस्य शोद्यदृष्ट्या किं योगदानमिति संक्षिप्य विमृश्यते मया।

विविधस्मृतीनामवलोकनेन स्पष्टी भवति यत् प्राचीनभारतस्य राजनैतिकस्थितिरतीव समीचीना अनुकरणीया आदर्शभूताचासीदिति। अत एव तत्कालीनशासकाः डिण्डिमद्योषपूर्वकमघोषयन् –

न मे स्तेनो जनपदे, न कदर्यो,न मद्यपः।
नाहिताग्निर्न चाविद्वान्, न स्वैरी, स्वैरिणी कुतः।।

(छान्दोग्योप.– ४/११/५)

किन्तु दुर्भाग्यवशात् स्मार्तधर्मपरित्यागात् सम्प्रति देशस्य राजनीतिकस्थितिः अतीव शोचनीया संवृता। शासकानां, राजनेतॄणां, प्रशासकानां, राजकर्मचारिणाञ्च, भ्रष्टाचारेण, दुराचारेण, पदलोलुपतया, अर्थलिप्सया च अद्य समाजे विषमा स्थितिः समुत्पन्ना। सर्वेऽपि शासकाः, राजनेतारः, प्रशासकाश्च प्रजार्थं, परार्थं परित्यज्य स्वार्थान्धाः भूत्वा स्वार्थपूरणे, स्वोदरपूरणे च संलग्नाः अवलोक्यन्ते। अस्य प्रत्यक्षमुदाहरणानि सन्ति– बोफोर्सकाण्डम्, चाराकाण्डम् ,अलकतराकाण्डम् , स्पेक्ट्रम–

२ जी काण्डम् , तहलकाकाण्डम् , कोयलाकाण्डम् इत्यादीनि।

तदेतादृशराजनैतिकभ्रष्टाचारस्य निवारणस्य अस्माकं राजनेतॄणां, मन्त्रिणां, प्रशासकानां, सांसदानां, विधायकानां, कर्मचारिणाञ्च ध्यानाकर्षणं स्मृतिनिरूपितराजधर्मान् प्रति अतीव प्रासङ्गिकं प्रतिभाति। कस्यापि राष्ट्रस्य चरित्रं तदैव उत्तमं भविष्यति यदि तत्रत्यः- शासकवर्गः सच्चरित्रो भवतीति व्यासोपदेशस्य परिज्ञानं तेषां कृते आवश्यकम् । भगवता व्यासेन स्पष्टमुपदिष्टं यत् राज्ञः (शासकस्य) चरित्रस्य पतनोत्थानानुसारेणैव कस्यापि राष्ट्रस्य चरित्रं परिज्ञायते। तथा हि-

"कालो वा कारणं राज्ञः, राजा वा कालकारणम् ।
इति मे संशयो माऽभूद्, राजा कालय कारणम् ।
राजा कृतयुगस्रष्टा, त्रेतायाः, द्वापरस्य च।
युगस्य च चतुर्थस्य राजा भवति कारणम् ।।"

(महा. उद्योग- १३२/१७-१८)

किञ्च राजा, प्रशासकः, नेता वा यदि पापात्मा भवित तदा प्रजाजनाः अपि पापिष्ठाः जायन्ते। एतद्विपरीतं राज्ञि धर्मपरायणे सति तदीयप्रजा अपि धार्मिकाः भवन्तीति सिद्धान्तितं स्मृतिकारैः। यथोक्तम् -

"राज्ञि पापिनि पापिष्ठाः, धर्मिष्ठे राज्ञि धार्मिकाः।
राजानमनुवर्तन्ते, यथा राजा तथा प्रजाः।।"

इत्थञ्च शासकैः, नेतृभिश्च स्वचरित्रसंरक्षणाय सततं समुद्यतैर्भाव्यं, स्मृतिप्रोक्तानां सदाचारनियमाश्च सर्वथा परिपालनीया इति धर्मशास्त्रकाराणामुपदेशः निश्चयमेव कल्पिष्यते राजनैतिक भ्रष्टाचारनिवारणाय।

प्रजाः राजभिः पुत्रा इव परिपालनीयाः, राजा च प्रजाजनैर्पितृवत् सेवनीय इति तयोर्मध्ये पितृपुत्रयोः पारस्परिकः परमपुनीतसम्बन्धो विद्यते इति प्रतिपादितं स्मृतिषु स्मृतिकारैः।

स्मृतिकाराणामुपदेशमनुसरता महाकविना कालिदासेनापि रघुवंशे निरूपितम् ।

"प्रजानां विनयाधानाद् रक्षणाद्, भरणादपि।
स पिता, पितरस्तासां केवलं जन्महेतवः।।"

राजधर्मान् निरुपयन् भगवान् मनुः स्पष्टं प्रतिपादयति यद् यथा पिता निज सुखं दुःखञ्चोपेक्ष्य सन्ततीनां भरणपोषणनिमित्तं सदा चिन्तित उद्योगशीलश्च तिष्ठति तथैव राजाऽपि स्वीयं सुखं, कष्टं, प्रियाप्रिये च परित्यज्य प्रजाजनस्य समग्रराष्ट्रस्य च सुखाय समृद्धये च अहर्निशं चिन्तयेत् । यथाह–

"तस्माद् यम इव स्वामी स्वयं हित्वा प्रियाप्रियम् ।
वर्तेत याम्यया वृत्त्या जितक्रोधो जितेन्द्रियः।। (मनु. ८/१७३)

मनुमतमिदं राजनीतिविज्ञेन कौटिल्येनापि समर्थितम् –

"प्रजासुखे सुखं राज्ञः, प्रजानाञ्च प्रिये प्रियम् ।
नात्मप्रियं प्रियं राज्ञः, प्रजानान्तु प्रियं प्रियम् ।।"

महाभारतस्य शन्तिपर्वणि युधिष्ठिरादिपाण्डवानां पुरतः राजर्धमुपदिशन् पितामहः भीष्मः गर्भिण्याः अति सुन्दरोदाहरणद्वारेण प्रतिपादितवान् यद् यथा गर्भिणीमाता गर्भस्थशिशोः हितमहर्निशं चिन्तयन्ती निजप्रियं भोज्यवस्तूनि सर्वथा परित्यजति, कटुकमौषधादिकं च सततं सेवते तथैव राजाऽपि प्रजासुखाय रक्षणाय च स्वप्रियाप्रिये सर्वथा परित्यजेत। यथोक्तम् –

"यथा हि गर्भिणी हित्वा स्वं प्रियं मनसोऽनुगम् ।
गर्भस्य हितमाधत्ते तथा राजाऽप्यसंशयम् ।।"

(म.शा. ५६/४६)

महर्षिव्यासेन स्पष्टमुद्घोषितं यद् राजपदं भोगाय, विलासाय ऐन्द्रियसुखाय च न प्राप्यते, अपितु सर्वतः कण्टकाकीर्णं महते कष्टाय कल्पते पदमिदम् –

"राज्ञां शरीरग्रहणं न भोगाय महीपते।
क्लेशाय महते पृथ्वी– स्वधर्म– परिपालनम् ।।" (मार्क.पु. १३०/३३)

अभिज्ञानशाकुन्तले राज्ञःदुष्यन्तस्य चरितमुपर्वणयन् महाकवि–कालिदासोऽप्याह–

"स्वसुख–निरभिलाषः खिद्यसेऽन्यस्य हेतोः।"

आधुनिकयुगे राष्ट्रहितं प्रजासुखञ्च सर्वथोपेक्ष्य निजस्वार्थसाधने, शरीरभोगविलासयोः आकण्ठनिमग्नानां शासकानां, राजनेतृणाञ्च कृते सर्वथा अनुकरणीयानि इमानि उदाहरणानि।

जनमत–सम्माननाय लोकाराधनाय च परमपुनीतां, प्राणोपमां पतिव्रतां निजपत्नीं सीतामपि पत्यिज्य यावज्जीवं कष्टमनुभवता मर्यादापुरूषेण रामेण आधुनिक–शासकानां

समक्षं किमेकं ज्वलन्तमुदाहरणं न उपस्थापितम् ?–

"स्नेहं दयाञ्च सौख्यञ्च यदि वा जानकीमपि।
आराधनाय लोकस्य त्यजतो नास्ति मे व्यथा।।"

( उत्तरराम चरितम् )

स्वार्थसाधनप्रवृत्तानां, प्रजापीडकानां शासकानां नेतृणां च कीदृशी दुर्गतिर्भवतीति प्रतिपादयन् महर्षिमनुः कथयति–यः राजा मोहवशात् स्वकर्त्तव्याकर्त्तव्ये विहाय सामान्यजनतां पीडयति शीघ्रमेव सः सबान्धवः राजपदात् च्युतो भवति विनश्यति च। यथा अन्नाभावे क्षीणशरीराणां जनानां प्राणाः नाशमुपयान्ति तथैव प्रजापीडनात् राज्ञामपि प्राणाः विनश्यन्ति–

" मोहाद् राजा स्वराष्ट्रं यः कर्षयत्यनवेक्षया।
सोऽचिराद् भ्रंश्यते राज्यात् जीविताच्च सबान्धवः।।
शरीरकर्षणात् प्राणाः क्षीयन्ते प्राणिनां यथा।
तथा राज्ञामपि प्राणाः क्षीयन्ते राष्ट्रकर्षणात् ।।"

(मनु. ७/ १११-११२)

एवमेव यस्य दुर्वृत्तस्य राज्ञः राज्ये दुष्टैः वञ्चकैः, लुण्ठकैश्च सर्वतः प्रपीडिताः विक्रोशन्तः जनाः तेन तत्कर्मकारिभिर्वा न संरक्ष्यन्ते, न स जीवितः, अपितु वस्तुतः मृत एवेति आह स्मृतिकारः मनुः–

"क्रोशन्त्यो यस्य राज्याद् ह्रियन्ते दस्युभिः प्रजाः।
सम्पश्यतः सभृत्यस्य,मृतः स, न तु जीवितः ।। " (मनु . ७/१४३)

मनुस्मृतिकारस्य एषः सुस्पष्टः उपदेशः यत् प्रजावर्गमरक्षन् राजा यदि ताभ्यः करं शुल्कं वा गृह्णाति तदा सः तासां मलापहारको भवति, सद्यः नरकं च व्रजति।

" योऽरक्षन् बलिमादत्ते करं शुल्कञ्च पार्थिवः।
प्रतिभागं च दण्डं च स सद्यो नरकं व्रजेत् ।। (मनु. ८/३०७)
अरक्षितारं राजानं बलिषड् भागहारिणाम् ।
तमाहुः सर्वलोकस्य समग्रमलहारकम् ।।

(मनु . ८/३०८)

सर्वतो धर्मषड्भागो राज्ञो भवति रक्षितः।
अधर्मादपि षड् भागो भवत्यस्य ह्यरक्षतः।।" (मनु . ८/३०४)

प्रजापालने सम्यकरक्षणे च अहर्निशं प्रवृत्तं राजानं प्रशंसन् मनुः कथयति यत् धर्मेण प्रजाःसंरक्षन् दण्ड्यांश्च दण्डयन् नृपतिः प्रतिदिनं सहस्रशतदक्षिणयज्ञैः यजते, तस्य आयुः, कोशः, राष्ट्रञ्च अनुदिनं वृद्धिमेति-

"रक्षन् धर्मेण भूतानि राजा वध्यांश्च घातयन् ।
यजतेऽहरहः यज्ञैः सहस्रशतदक्षिणैः।। (मनु . ८/३०६)
निग्रहेण हि पापानां साधूनां संग्रहेण च।
द्विजातय इवेज्याभिः पूयन्ते सततं नृपाः।। (मनु. ८/३११)
संरक्ष्यमाणो राज्ञा यं कुरुते धर्ममन्वहम् ।
तेनायुर्वर्धते राज्ञो द्रविणं राष्ट्रमेव च ।। (मनु ७/ १३६)

किञ्च, मित्र-पुत्रादिबन्धुकारणात् लोभवशाद् वा राजा यदि प्रजापीडकान् चौरान् साहसिकान् , दण्ड्यांश्च न दण्डयति सः प्रजाजनस्य द्वेषभाग् भवित, महदयशः प्राप्नोति, नरकञ्च प्रपद्यते। यथोक्तम् -

"न मित्रकारणाद् राजा विपुलाद्वा धनागमात् ।
समुत्सृजेत् साहिसिकान् सर्वभूतभयावहान् ।
साहसे वर्तमानं तु यो मर्षयति पार्थिवः।
स विनाशं ब्रजत्याशु विद्वेषं चाधिगच्छति।। (मनु. ८/१२८)
अदण्ड्यान् दण्डयन् राजा दण्ड्याश्चैवाप्यदण्डयन् ।
अयशो महदाप्नोति नरकञ्चैव गच्छति।। मनु . ८/१२८

क्षीणधनोऽपि राजा अग्राह्यमर्थं (उत्कोचादि घनं) यतस्ततः न गृह्णीयात् । एवमेव सुसमृद्धोऽपि नृपः स्वल्पमपि ग्राह्यं धनं न त्यजेत्। यतः अनादेय-धनस्य ग्रहणात् , ग्राह्यधनपरित्यागाच्च राज्ञः दौर्बल्यं प्रजाजनैः ख्याप्यते, प्रेत्य च नकादिभोगात् स विनश्यति। यथाह-भगवान् मनुः-

"अनादेयं नाददीत परिक्षीणोऽपि पार्थिवः।
न चोदयं समृद्धोऽपि सूक्ष्ममप्यर्थमुत्सृजेत् ।।
अनादेयस्य चादानाददेयस्य च वर्जनात् ।
दौर्बल्यं ख्याप्यते राज्ञः स प्रेत्येह च नश्यति।।"

(मनु.७/१०७०-७१७)

प्रजाजनं धर्मेण परिपालयन् शासकः सर्वस्य भृतिदातुः वणिगादेः, भृत्यदातुः श्रोत्रियादेः सकाशात् तदर्जितपुण्यस्य षड्भागं प्राप्नोति, किन्तु प्रजाः अरक्षतः राज्ञः

लोककृताधर्मादपि पापषड्भागः भवति। निजराज्यनिवासिनां नागरिकाणां सम्यक् पालयिता नृपः तैरर्जित -जप-याग- दान-देवतापूजनाद्यार्जित पुण्यस्य षड्भागभाग् भवति। यथोक्तं मनुना-

सर्वतो धर्मषड्भागो राज्ञो भवति रक्षतः।
अधर्मादपि षड् भागो भवत्यस्य ह्यरक्षतः।
यदधीते यद्यजते यद्ददाति यदर्चति
तस्य षड् भागभाग् राजा सम्यग् भवति रक्षणात् ।। (मनु. ८/३०४-३०५)

मनुमतमिदं समर्थयन् योगियाज्ञवल्क्योऽपि आह-

"अरक्ष्यमाणाः, कुर्वन्ति यत् किञ्चित् किल्विष प्रजाः।
तस्मात्तु नृपतेरर्धं यस्माद् गृहणात्यसौ करान् ।। याज्ञ. १/३३७-३४१
प्रजा-पीडन-सन्तापात् समुद्भूतो हुताशनः ।
राज्ञः कुलं श्रियं प्राणांश चाऽदगध्वा न निवर्तते।।

दुःख कष्टाभिभूताःकार्यार्थिनः प्रजाजनाः बालवृद्धातुराः वा यदि राजानमक्षिपन्ति तर्हि राज्ञा क्षन्तव्यास्ते। राजा, प्रशासकः नेतारश्च यदि प्रभुत्वदर्पात् प्रजा-पीडन-सन्तापात्समुद् दुर्वल- दुःखितप्रजाजनाम् न क्षमन्ते तर्हि ते नरकं व्रजन्ति। किन्तु ये तेषां कष्टं धैर्य पूर्वकमाकर्ण्य क्षमन्ते तत्प्रतीकारञ्च कुर्वन्ति ते इहलोके स्वर्गलोके च पूजिताः भवन्तीति स्पष्टं प्रतिपादयति स्मृतिकारः मनुः-

"क्षन्तव्यं प्रभुणा नित्यं क्षिपतां कार्यिणां नृणाम् ।
बालवृद्धातुराणां च कुर्वता हितमात्मनः।।
यः क्षिप्तो मर्षयत्यार्तैस्तेन स्वर्गे महीयते।
यस्त्वैश्यर्यान्न क्षमते नरकं तेन गच्छति।। मनु. ८/३११-३१२

एवञ्च स्वष्टीभवति यत् साम्प्रतिक-भारतीयसमाजे, राष्ट्रे, विश्वस्मिन् विश्वे च अद्यत्वे परिव्याप्तस्य, अनुदिनं वर्धमानस्य, राजनीतिकभ्रष्टाचारस्य निवारणाय मन्वादिप्रतिपादित-स्मार्तधर्मस्य प्रासङ्गिकता, उपादेयता च अद्यत्वेऽपि सुतरां वतर्त एव अस्माकं पूर्वजैः मनुयाज्ञवल्क्यादिस्मृतिकारैः निरूपितस्य राजधर्मप्रकरणस्याध्ययनं विधाय तदनुसारमस्माकं प्रशासकाः, शासकाः, राजनेतारः, सांसदाः, विधायकाः, पदाधिकारिणः, कर्मचारिणः, सामान्यजनाश्च यदि स्मार्तधर्ममनुसरन्ति, स्व-स्व धर्मं च सम्यक् पालयन्ति तदा अद्य सर्वतो व्याप्तः न केवलं राजनैतिक भ्रष्टाचारः

अपितु आर्थिक-नैतिक- सामाजिकादि सर्वविधः भ्रष्टाचारः विनाशमेष्यति, सर्वथा सुखी, सम्पन्नश्च भवष्यिति अस्माकं समाजः इति शम् ।।



# केरलदेशः संस्कृतविद्यानुसन्धानस्य आधारभूमिः

– आचार्यः राजन्. ई. एम्.

गुरवे सर्वलोकानां भिषजे भवरोगिणां
निधये सर्वविद्यानां दक्षिणामूर्तये नमः।।
अपूर्वं वस्तु निर्मातुं कवेश्शक्तिप्रदायिनौ।
मिथोऽर्धन्तनुमास्थाय दीव्यन्तौ दम्पती भजे।।

विदितमिदं समेषां यदा गोकर्णमाकन्याकुमारिं विस्तृतं भार्गक्षेत्रम् ' तदुक्तं नारायणभट्टपादेन नारायणीये–

गोकर्णावधि सागरेण धरणीं दृष्ट्वाऽर्थितस्तापसैः
उत्सार्योद्धृतकेरलो भृगुपते वातेश संरक्ष माम् । इति।

एतदिदानीं प्राप्तह्रासं केरलदेश इति व्याह्रियते। अयं देशः देवभूमिरिति संज्ञयाऽलंकृतस्तत्र कारणमत्रासंख्याकाः देवालयास्सन्ति। एष केरलदेशः संस्कृतविद्यानुसन्धानस्याधारभूमिरिति विषयोऽत्र प्रस्तूयते।

अस्य विषयस्यान्तः प्रवेशात्पूर्वं प्रासंगिकं किञ्चिद्विचारणीयम् । प्रासंगिकत्वं नाम स्मृतत्वे सति उपेक्षानर्हावम् । प्रसंगोऽत्र केरलदेशस्य संस्कृतविद्यानुसन्धानस्य आधारभूमित्वे निमित्तमासीत् । तदेवात्र प्रथमं प्रस्तूयते।

(२) भूसम्पन्नम्पूतिरिब्राह्माणानाम् अधीने आसीत् (केरलदेशेब्राह्मणाः नम्पूतिरीति शब्देन व्यवह्रियन्ते) ते ब्राह्मणाः स्वगृहभूसम्पदं विभज्य स्वस्वयवीयेभ्यो दातुं नैच्छन् , स्वस्वगृहभूसम्पन्नाशभयात् । यदि ज्येष्ठभ्रात्रा सम्पद्यवीयसे विभक्ताऽभविष्यत्पौनः पुन्यविक्रयणेन कश्चिन्मार्गो दृष्टः, यज्ज्येष्ठ एव गृहस्वामी ब्राह्मविवाहेऽधिकारी च। कनिष्ठानां ब्राह्मविवाहेऽधिकारो नास्ति। अतः कनिष्ठाः राजविद्वत्सभायां गुरुकुले धनाढ्यब्राह्मणमाश्रित्य वा जीवेयुः। पठने पाठने ईश्वरसेवायाञ्च निरता अभूवन् । एवं प्राप्तव्युत्पत्तयस्ते नानाविषयेषु ग्रन्थान् कृत्वा स्वाश्रयदात्रे ददुः। तत्रोत्तमोदाहरणं नारायनभट्टपादः, सः बहूनां राज्ञामाश्रये जीवनं नयन्नैकान्ग्रन्थान्प्रणिनाय। तत्र राजस्तुतिपराः, देवस्तुतिपराः, प्रबन्धस्वरूपाः शास्त्ररूपाः ग्रन्थाः वर्त्तन्ते। प्रबन्धमधिकृत्य वक्ष्यामि।

केरलदेशे भगवत्पादशंकरादनु बहूनां पुस्तकानां कर्ता नारायणभट्टपाद एव। सोऽपि ब्राह्मविवाहं नाकार्षीत् । स्वगुरोः अच्युतपिषारडेः भागिनेयीं पाणिकृत्य स्वप्रतिभया प्रज्ञया तन्त्रमाश्रयदातारमाश्रित्य ग्रन्थानरचयत् ।' चु तत्तच्छास्त्र क्वचित्तत्तचात्र केन्द्राण्यासन् यथा कूटल्लूरगुरुकुलं व्याकरणे, पय्यूरुभट्टतिरिगृहं मीमांसायाम् , कोटिलिंगपुरं वैद्यकाव्यज्योतिश्शास्त्रेषु, कोच्चिराजवंशः न्यायशास्त्रे। तत्रेतरे विषया गौणतया आसन् ।

न केवलं ब्राह्मणा अपि तु अब्राह्मणा अपि वेदान्तेतरशास्त्रमधीयानाः केरलेषु अवर्तन्त। अत्र न्यायशास्त्रे अच्युतपिषारटिः, पण्डितराजगोविन्दन् नम्ब्यार्-व्याकरणे, रामवारियरु काव्यज्योतिश्शास्त्रयोर्बहूनां स्वतन्त्रग्रन्थानां व्याख्यानानाञ्च व्याख्याता (वल्लत्तोल्नारायणमेनोन् ऋग्वेदस्यव्याख्याता, महाकविः कुमारनाशान्सौन्दर्यलहर्याः व्याख्याता। अब्राह्मणेषु वेदान्तमधीतिनः केचन आसन् , ते नारायणगुरु-चट्टाम्बिस्वामिप्रभृतयः) वेदान्ते द्वित्राः पञ्चषा वा आसन् , किन्तु शास्त्रान्तरेषु असंख्याकाः विद्वांसः ब्राह्मणाऽब्राह्मणभेदान्विना राज-धनाढ्यब्राह्मणप्रेरिताः असंख्याकान्ग्रन्थतल्लजान् अलिखन् आसन् । तेषु तेषां केचन गृहाः स्मर्यन्ते। प्रायेण स्वनामापेक्षया गृहनाम्ना प्रसिद्धाः नम्पूतिरिद्विजाः पय्यूरभट्टमीमांसकाः एवाधिकसंख्याका अवर्तन्त। एतद्गृहमधुना नास्ति। एतस्य विचारः चरित्रपुस्तकेषु उपलभ्यते।

कूटल्लूर्- वैयाकरणानामिदं गृहम् आकर आसीत् । अत्र व्याकरणस्थापनेऽध्ययने प्रामुख्यं दत्तम् । शिष्योऽत्रागत्य व्याकरणमधीत्य न्यूनातिन्यूनं सिद्धान्तकौमुदीमदृष्ट्वा लिखेदिति गुरूणां संकल्पः। अतोऽत्र सिद्धान्तकौमुदीग्रन्थाः बहवः आसन् । अपि च स्वतन्त्रा ग्रन्थाः। ग्रन्थेषु नीलकण्ठद्विजवरस्य विष्णुसहस्रनामोपरिलिखितं व्याख्यानं प्रसिद्धम् । यत्र प्रतिनाम ससूत्रं व्युत्पत्तिः प्रदर्शिता। इतः बहूनि काव्यान्यपि उपलब्धानि।

महिषमंगलम् - काव्ये आशौचे स्मृतौ च बहवः ग्रन्थकर्तारोऽत्रावसन् । अत्रशंकरपरमेश्वरावास्ताम् । तत्र शंकरेण केरलमात्राचारविषयिणी शांकरस्मृतिः, परमेश्वरेण महिषमंगलभाणः केचनाशौचपराग्रन्थाः लिखिताः।

आरुरुभट्टतिरिः- अत्र कवय आसन् । अत्रस्थेन केनचित् उत्तरनैषधं लिखितम् ।

पुतुमना- ज्योतिश्शास्त्रस्य प्रभावोऽस्यासीत्अत्रस्थः सोमयाजी दशाध्यायीनामानं ज्योतिश्शास्त्रग्रन्थं प्रणिनाय।

**पटिञ्ञारेक्कुत्तुल्लिः-** सुकुमारापरनामा प्रभाकरः श्रीकृष्णविलासाख्यम् अतिरमणीयं काव्यमकरोत् । एतदधुनापि सहृदया बहु मन्यन्ते। केरलदेशे पुरा गुरुकुलेषु एतदध्यापनीयमासीत्।

सितामणिः (वेण्मणिः) यत्र कवीनां तिस्रः परंपरा अवर्तन्त। यत्रैतत्स्थाननुग्रहीतुं काचिद्यक्षिणी समागता, तस्याः मूर्तिः अंकणे आसीत्। अत्र शास्तृशर्मा आसीत्।

**मान्तट्टा-** गंगातरंगिणी चातकसन्देशः। न च रत्नमालिका अन्तिमो ग्रन्थः केरलीयन्यायशास्त्रग्रन्थानां निकषायमाणः यत्र व्यधिकरणस्थसार्वभौमीयद्वितीयलक्षणोपरि ऊनशतं न च पदारब्धाः पूर्वपक्षाः वर्तन्ते। अत एवास्य न च रत्नमालिकेति नाम दत्तम् । तदुक्तानां बहूनां ग्रन्थानां कैरल्या व्याख्यानन्तथा बहून्संस्कृतग्रन्थान् अकार्षीत् । अत्र गृहे पितापुत्रश्च कवी आस्ताम् ।

**चेरुश्शेरी-** श्रीकृष्णचरितं मणिप्रवालम् । सम्पूर्णं श्रीकृष्णोदन्तं संस्कृत-कैरलीमिश्रभाषयाऽलिखत् । इदं एकस्य द्विजगृहस्य नाम वर्तते।

**मेल्पुत्तुरु-** तत्र नारायणभट्टपादः आसीत् । एषः समस्तशास्त्रेषु कृतभूरिपरिश्रमः नैकानां ग्रन्थानां प्रणेता च। एषः स्वयं लिखति उपरिनवेति गृहस्य नाम। उपरिनवेत्यत्रोपरिशब्दस्य कैरल्यां 'मैलू' इत्यर्थः, नवेत्यस्य पुत्तु, ग्रामेत्यस्य ऊरु इति चार्थः- मेल्पुत्तुर्।

नारायणभट्टपादः प्रायेण सर्वेषुशास्त्रेषु ग्रन्थान्प्रणिनाय। तेषु प्रक्रियासर्वस्वं अपाणिनीयप्रामाण्यसाधनम् इति व्याकरणे प्रसिद्धं ग्रन्थद्वयम् , धातुकाव्यमित्यपूर्वो ग्रन्थः, यत्र भीमव्याकरणदृष्ट्या धातून्यथाक्रमं सन्निवेश्य पद्यानां रचना वर्तते। त्रिसर्गात्मकमिदं काव्यम् । त्रिंशदधिकाः प्रबन्धाः वर्तन्ते। नारायणीयं प्रसिद्धमेतस्य भागवतसंग्रहात्मकं गुरुवायूरप्पस्तुतिपरं काव्यं प्रसिद्ध वर्तते। प्रबन्धः- नानापारम्परिककलाभिः परिपुष्टः केरलदेशः। तासु कलासु एका चाक्यारुकूत्त् । चाक्यारुनामा कश्चन जातिविशेषः। एतेन प्रतिदिनम् एका कथा जनसमक्षं वाचिकाद्याभिनयेनाभिनीयते। तत्र नारायणभट्टपादः बहूः कथाः अकरोत्, तासु निररनुनासिकप्रबन्धः, यत्र शूर्पणखायाः लक्ष्मणाच्छिन्ननासिकायाः रोदनं विषयः।

इत्थञ्च केरलेषु प्रायेण सर्वत्र ब्राह्मणादिगृहेषु पुरातनकाले तालपत्रे तदनु श्वेतपत्रेऽसंख्याकाः विद्वांसः नानाशास्त्रेषु ग्रन्थान्काव्यानि च रचयामासुः। तेषां हस्तलिखितकाव्यानां संरक्षणे कष्टमनुभूय विविधासु कलाशालासु तत्र तिरुवनन्तपुरम् , तृप्पुणित्तुरा, कुक्कुटक्रोडपुरमित्याद्यास्वधुनापि प्रकाशमप्राप्ताः पाण्डुलिपिग्रन्थाः

श्वेतपत्रोल्लिखितग्रन्थाः वर्तन्तेऽत्यन्तं संस्कृतानुरागिणाम् उपकारप्रदाः। अपि तेषां प्रकाशनेन येन स ग्रन्थ उल्लिखितस्तस्य यशोऽपि लभ्यते प्रकाशकस्य पुण्यादृष्टमपि स्यात् । इत्थमप्रकाशितग्रन्थानां प्रकाशने राष्ट्रियसंस्कृतसंस्थानस्य पद्धतिः पूर्वमासीत्परमधुना सा त्यक्ता। कालटिश्रीशङ्कराचार्यविश्वविद्यालयेन तिरुपतिस्थराष्ट्रियविद्यापीठेन च महानुपकारः कर्तुं शक्यः। तत्र प्रयासो विधीयते चेदवश्यं असंख्याकाः ग्रन्थाः केरलादेव उपलभ्यन्ते। अत एवैषः विषयः मया स्वीकृतः।। अपि चेदानीमपि बहुषु नम्पूतिरिब्राह्मणगृहेषु एतादृशग्रन्थमाहात्म्यमजानन्तो ब्राह्मणाः बहून्तादृशग्रन्थान्न प्रकाशनाय ददति। हा! कष्टं तेषां मूर्खता।

अवलम्बितपुस्तकानि

१. Catalogus and Catalogorum- by Dr. K. Kunjunni Raja.
२. केरलसंस्कृतसाहित्यचरित्रम् – वटक्कूटराजराजवर्मा
३. संस्कृतसाहित्यचरित्रम् – उल्लूर
४. नारायणीयम् – वनमालाव्याख्यानम् ।



# मीमांसाशास्त्रे अनुसन्धेया विषयाः मीमांसया अनुसन्धाने नवसंभावनाश्च

– प्रो० एस. वेङ्कटेशताताचार्यः

**प्रस्तावना–**

अखिलपुरुषार्थसाधनोपायबोधनार्थं प्रवृत्तस्य अपौरुषेयशब्दराश्यात्मकस्य वेदस्य अर्थं निष्कृष्य बोधयितुं महर्षिणा जैमिनिना षोडशाध्यायात्मकं मीमांसाशास्त्रं प्रणीतम् । नत्राद्येषु द्वादशसु अध्यायेषु यागादिकर्मानुष्ठानोपयोगिनिष्कृष्टज्ञानसिद्ध्यर्थं वेदवाक्यार्थविचारः कृतः, अत एव अयं भागः मीमांसायाः कर्मकाण्डमिति व्यवह्रियते। तदुत्तरं चतुर्ष्वध्यायेषु देवतानां स्वरूपादिकं प्रतिपाद्यत इत्यतः स भागो देवताकाण्डमिति व्यवह्रियते। अस्य भागस्य संकर्षाख्येन विदुषा भाष्यं प्रणीतमिति प्रपञ्चहृदये उक्तम् । अत एवास्य संकर्षकाण्डमिति नामापि प्रसिद्धमभूदिति भाति। परन्त्विदं भाष्यं नेदानीं समुपलभ्यते। संकर्षकाण्डस्य अध्ययनपरम्परापि इदानीं लुप्तैव। एवं महर्षिणा जैमिनिना कर्मानुष्ठानप्रतिपादकवेदवाक्यार्थविचारे कृते महर्षिणा वेदव्यासेन वेदानामुत्तरभागरूपाणामुपनिषदामर्थविचारार्थं चतुरध्यायात्मकं वेदान्तशास्त्रं सूत्ररूपेण प्रणीतम् । स च भागः उत्तरमीमांसेति व्यवह्रियते। तत्र ब्रह्मविषयकविचारस्य कृतत्वात् ब्रह्मकाण्डमिति ब्रह्ममीमांसेति च तस्य प्रसिद्धिर्दृश्यते। कर्मकाण्डस्य च पूर्वमीमांसेत्यपि व्यवहारः वर्तते।

**मीमांसापदव्युत्पत्तिः**

मीमांसनं मीमांसा। भौवादिकात् "मान पूजायामि" तिधातोः "मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्ये"[१] ति सूत्रेण सन्प्रत्ययः। स च "मानेर्जिज्ञासायामि"ति वार्तिकानुसारेण जिज्ञासार्थकात् मान्धातोर्भवति। धातुपाठे पूजायामित्यर्थनिर्देशेऽपि "धातूनामनेकार्थाः" इति न्यायात् मान्धातुर्जिज्ञासार्थकोऽपि भवति। सन्प्रत्ययश्च "अनिर्दिष्टार्थप्रत्ययाः स्वार्थे भवन्तीतिन्यायेन स्वार्थे (धात्वर्थे जिज्ञासायामेव) भवति। "सन्यङोरि"[२]तिसूत्रेण "एकाचो द्वे प्रथमस्ये"[३] त्येतदधिकारस्थेन "मान्से"ति सन्नन्तस्य प्रथमैकाचो "मान्सि"त्यस्य द्वित्वे "मान्स् मान्स" इति स्थिते "हलादिः शेष"[४] इति सूत्रेण अभ्यासस्थ-

नकारसकारयोर्लोपे "ह्रस्व" इत्यनेन अभ्यासाकारस्य ह्रस्वे "सन्यत"[५] इति अकारस्य इत्वे "मान्बधे"तिपूर्वोक्तसूत्रेणैव इकारस्य दीर्घे धातुनकारस्य "नश्चापदान्तस्य झली"त्यनेन अनुस्वारे "मीमांस" इति जाते "अ प्रत्ययादि"[७] ति सूत्रेण "स्त्रियामि"त्याधिकारस्थेन स्त्रीत्वविशिष्टभावार्थे अकाररूपकृत्प्रत्यये "अतो गुण"[८]"इत्यनेन पररूपे स्त्रियां विद्यमानादकारान्तात् "मीमांस" शब्दात् "अजाद्यतष्टावि"[९]त्यनेन टापि मीमांसाशब्दः सिद्धयति। तस्य च जिज्ञासेत्यर्थः। धातुपाठनिर्दिष्टपूजार्थकस्तु मान्धातुः चौरादिक एव भवतीति "मान्बधे"त्यादिसूत्रे कौमुद्यां स्पष्टम् ।

(मीमांसाया अध्ययनस्य प्रयोजनम् )

मीमांसाशास्त्रस्य मुख्यं प्रयोजनं तु शास्त्रप्रतिपाद्यस्य धर्मस्य अनुष्ठानमेव। यथोक्तं वार्तिककारेण कुमारिलभट्टेन–

**"अथातोधर्मजिज्ञासा सूत्रमाद्यमिदं कृतम् ।**
**धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनमि।।"[१०]ति।**

अन्यान्यपि मीमांसाशास्त्रस्य प्रयोजनानि सन्ति संभाव्यन्ते च। तथाहि–शास्त्रमिदं वाक्यार्थनिर्णययुक्तिं प्रतिपादयति। अत एवास्य वाक्यशास्त्रत्वव्यपदेशः वाक्यं च वैदिकं, स्मार्तं, पौराणिकं लौकिकञ्चेति विविधं भवति। तत्र वैदिकवाक्यान्यधिकृत्य कृतो विचारः मीमांसाशास्त्राधिकरणेषु उपलभ्यते। तत्रत्ययुक्तिं पुरस्कृत्य स्मार्तादीनामपि वाक्यानां सन्देहावस्थायामर्थो निर्णेतुं शक्यते। अतः धर्मज्ञानेन सह सन्दिग्धवाक्यार्थनिर्णयरूपानुषङ्गिकप्रयोजनमपि मीमांसाशास्त्रस्य वर्तत इत्यतः न्यायालयेषु न्यायनिर्णयेऽपि अस्य महानुपकारः संभाव्यते।

**मीमांसायामनुसन्धाने भागद्वयम् –**

मीमांसाशास्त्रानुसन्धानं वयं भागद्वयात्मना विभक्तुं शक्नुमः। अस्य च विभागस्य हेतुः अनुसन्धानस्य प्रयोजनद्वयम् । मीमांसाशास्त्रस्य ज्ञाने परिष्कारः इत्येकं प्रयोजनम्। मीमांसान्यायानां सञ्चारेण निर्णयप्राप्तिरित्यपरं प्रयोजनम्। तदर्थं शास्त्रमूलग्रन्थानां व्याख्यानग्रन्थानाञ्च अन्वेषणमाविष्कारश्चेत्येकविधमनुसन्धानं, मीमांसाधिकरणोपयुक्तयुक्तयः काः, तासामुपयोगेन कथमन्यत्रापि निर्णयः प्राप्तुं शक्यत इति सोदाहरणं विचाररूपमपरविधमनुसन्धानं च कर्तव्यम्।

इदानीमुभयविधेऽप्यनुसन्धाने के विषयाः स्वीकर्तुं शक्यन्ते इति दिङ्मात्रमिह प्रदर्श्यते–

**मीमांसाज्ञानपरिष्कारार्थं कर्तव्यानि अनुसन्धानानि-**

शास्त्रज्ञानस्य परिष्कारार्थं ज्ञानसाधनेषु प्रधानभूतानां ग्रन्थानां यथावदवगमनमावश्यकम्। तदर्थं प्राचीनैः ग्रन्थकारैः विरचितानां ग्रन्थानां शुद्धसंस्करणस्य संपादनं कर्तव्यम्। अधुना मीमंसाशास्त्रे प्राय इमे ग्रन्था गुरुपरम्परया अधीयन्ते- १. मीमांसापरिभाषा, २. अर्थसङ्ग्रहः, ३. मीमांसान्यायप्रकाशः, ४. जैमिनीयन्यायमाला, ५. मानमेयोदयः, ६. शास्त्रदीपिका, ७. भाट्टदीपिका, ८. तन्त्ररहस्यम् , ९. प्रकरणपञ्चिका, १०. न्यायरत्नमाला, ११. भाट्टतन्त्ररहस्यम् , १२. मीमांसाकौस्तुभः, १३. शाबरभाष्यम् , १४. श्लोकवार्तिकम् , १५. तन्त्रवार्तिकम् , १६. विधिविवेकः, १७. विधिरसायनम् , १८. अङ्गत्वनिरुक्तिश्चेति। यद्यप्येतेषु सर्वेष्वपि ग्रन्थेषु मूलस्य शुद्धस्वरूपसंपादनं व्याख्यालेखनकार्यं (टिप्पणीलेखनं वा) च कर्तव्यं, तथापि केषाञ्चिद्ग्रन्थानां प्रशस्तानि व्याख्यानानि मूलसंपादनानि च प्रकाशितानीत्यतः येषु ग्रन्थेषु अनुसन्धानस्य महती आवश्यकता वर्तते तेषु कर्तव्यानि अनुसन्धानकार्याणीह निदिश्यन्ते-

१. जैमिनीयन्यायमाला- श्रीमाधवाचार्येण विरचिता जैमिनीयन्यायमाला तदुपज्ञविस्तरव्याख्यायुता पूर्वमीमांसाधिकरणविषयान् संग्रहेण सरलतया प्रकाशयति। अस्य ग्रन्थस्य सुपाठ्यलिपियुक्तं पुस्तकं नोपलभ्यते। अतः अस्य शुद्धपाठयुक्तं सुपाठ्यलिपियुक्तं विषमस्थलटिप्पणीसहितं च पुस्तकं सम्पादनीयम् ।

२. शास्त्रदीपिका- यद्यपि श्रीमदनन्तकृष्णशास्त्रिभिः मयूखमालिकासहिता शास्त्रदीपिका संपादिता, या इदानीमपि उपलभ्यते, तथापि शुद्धतरं संस्करणं विषमस्थलटिप्पणीसहितमपेक्ष्यते।

३. भाट्टदीपिका- भाट्टदीपिकायाः प्रशस्तं मूलपुस्तकं श्री ए. महादेवशास्त्रि एल्. श्रीनिवासाचार्याभ्यां संपाद्य मैसूर-प्राच्यविद्यापुस्तकालयात् प्रकाशितमधुनापि पुनर्मुद्रितं राष्ट्रिसंस्कृतसंस्थाने उपलभ्यते। तथा प्रभावलीव्याख्यायुक्तपुस्तकं निवीतान्तं श्रीमदनन्तकृष्णशास्त्रिभिः तदुत्तरं श्री ए. सुब्रह्मण्यशास्त्रिभिश्च संपादितं लभ्यते। परन्तु निवीतान्तभागस्य परिष्करणं, क्वचित् भाट्टदीपिकामूलपाठनिर्धारणं, स्थलविशेषे विशेषविवरणमित्येतत्त्रयसहितमेकं खण्डसंस्करणमपेक्षितम् ।

४. तन्त्ररहस्यम् प्रकरणपञ्चिका च- अनयोः क्रमशः बड़ौदाविश्वविद्यालयात् काशीहिन्दूविश्वविद्यालयाच्च श्रीरामाशास्त्रिरामस्वामिशास्त्रिभ्यां श्री ए. सुब्रह्मण्यशास्त्रिभिश्च संपादितयोः पुनर्मुद्रणमपेक्षितम् ।

५. मीमांसाकौस्तुभः- मीमांसाकौस्तुभः श्रीचिन्नस्वामिशास्त्रिभिः संपादित उपलभ्यते, तथापि शुद्धतरं संस्करणं स्थलविशेषेषु व्याख्यायुक्तमपेक्ष्यते।

६. शाबरभाष्यं तन्त्रवार्तिकञ्च- शुद्धपाठयुक्तं तन्त्रवार्तिकसहितशाबरभाष्यपुस्तकं नोपलभ्यते। अतः तत्संपादनं कर्तव्यम् । विषमस्थलटिप्पणी च अपेक्षिता।

७. श्लोकवार्तिकम् - श्लोकवार्तिकस्य श्रीपार्थसारथिमिश्रविरचितं न्यायरत्नाकराख्यं व्याख्यानमेव पूर्णतया उपलभ्यते। तदपि वस्तुतः शुद्धरूपेण प्रकाशनीयम् । श्रीमदुम्बेकभट्टरचिततात्पर्यटीकायाः स्फोटवादान्तमुपलब्धायाः श्रीसुचरितमिश्रविरचितकाशिकाटीकायाः अनुपलब्धिपर्यन्तमुपलब्धायाश्च पूर्णतया उपलब्धौ सुष्ठु प्रकाशने च यत्नः कार्यः।

८. विधिविवेकः- अस्य श्रीमण्डनमिश्रविरचितस्य श्रीवाचस्पति-मिश्रविरचितन्यायकणिकाटीकासमेततया मुद्रितस्यापि शुद्धं सरलव्याख्यायुक्तं संस्करणमपेक्ष्यते।

एवं पूर्वोद्धृतपाठ्यग्रन्थानां शुद्धपाठोपलब्धये अर्थज्ञानसिद्ध्यर्थं च कर्तव्यानि कार्याणि निबद्धानि। तदतिरिक्ततया श्रीभट्टसोमेश्वरकृतायाः तन्त्रवार्तिकव्यख्यायाः न्यायसुधायाः श्रीमदन्नम्भट्टकृतया राणकोज्जीवन्याख्यव्याख्या[११] सह प्रकाशनं कर्तव्यम्। इतोऽपि मीमांसाशास्त्रज्ञानवर्द्धनार्थं तत्र तत्र अधिकरणेषु उद्धृतानां श्रौतपरिभाषिकपदानां श्रौतयज्ञादिप्रक्रियाणां विवरणस्य अनुक्रमणिका निर्मातव्या। सर्वेषामधिकरणोद्धृतानां वेदवाक्यानां भाष्यानुसारेण अर्थः अनुक्रमणिकारूपेण संग्राह्यः। भाष्यवार्तिकादिग्रन्थेषु एकस्याधिकरणस्य वर्णकभेदोदाहरणभेदौ विमृश्य अनुक्रमणिकारूपेण प्रकाशनीयौ। अध्ययनपरम्परात इदानीमपगतस्य सङ्कर्षकाण्डस्य प्राभाकरप्रस्थानस्यच ग्रन्थानां यावदुपलम्भं संरक्षणे यतितव्यम् । तेषामर्थं ज्ञापयितुं व्याख्याश्च रचनीयाः।

यद्यपि इतोऽप्यन्ये बहवो ग्रन्थाः शास्त्रदीपिकाव्याख्या प्रकाशः, न्यायप्रकाशव्याख्या भाट्टालङ्कारः, तत्त्वबिन्दुः, नीतितत्त्वाविर्भाव इत्यादयः अनुपलभ्याः वा विरलप्रचारा वा दुर्ज्ञेयार्था वा विद्यन्ते, तेषां च ज्ञानं मीमांसाज्ञानसमृद्धिं नूनमेव करिष्यति, तथापि अनन्तासु अनुसन्धानभूमिषु पूर्वोक्तभूमयः आवश्यकतादृष्ट्या-प्राथम्यमावहन्तीति भाति।

अथेदानीं मीमांसायामनुसन्धानस्य यो द्वितीयोभाग उक्त, अत्रोपयुक्तन्यायैरन्यत्र निर्णयलाभस्य विमर्श इति तस्य दिक् प्रदर्श्यते-

मीमांसाशास्त्रे बहुभिर्लौकिकन्यायैः अधिकरणेषु निर्णयः कृतः। तत्र केचन

भवन्ति–

| | | |
|---|---|---|
| १. उपक्रमस्य प्राबल्यम् | ३।३।१ | अधिकरणे |
| २. भूयसां प्राबल्यम् | १२।२।७ | " |
| ३. अङ्गप्रधानगुणविरोधे प्रधानगुणानुग्रहः | १२।२।९ | अधिकरणे |
| ४. अतिदेशन्यायः | ७।१।१ | " |
| ५. नष्टाश्वदग्धरथन्यायः | ३।३।४ | " |
| ६. आगन्तनामन्ते निवेशः | ५।३।३ | " |
| ७. प्रथमातिक्रमणे मानाभावः | ११।१।६ | " |

इत्यादयः।

अन्यत्रापि बहुत्र लौकिकयुक्तिभिरेव निर्णयः कृतः।

एवं स्थिते मीमांसाधिकरणोपयुक्तयुक्तिभिः स्मृत्यादिस्थवाक्यानां लौकिकानां च वाक्यानां कथमर्थनिर्णयः कर्तुं न शक्यते? अतएव धर्मशास्त्रे बहुत्र मीमांसान्यायानां सञ्चारो दृश्यते। ततः किञ्चिदत्र उदाह्रियते–श्रीमाधवाचार्यप्रणीते कालमाधवाख्ये धर्मशास्त्रनिबन्धे जयन्तीजन्माष्टमीव्रतयोः एककर्मत्वमाशङ्क्यात्र मीमांसाधिकरणन्यायेन भिन्नकर्मत्वं साधितम्। तथाहि– जयन्तीजन्माष्टम्योः रूपभेदाभावात् कर्मैक्यं तावत् प्राप्तम्। यथा यागस्य द्रव्यदेवते रूपं, तथा व्रते नियमविशेषः स्वरूपम्। अत्र च उपवासजागरणकृष्णपूजाचन्द्रार्घ्यदानरूपनियमः उभयत्र समान इति।

अर्थनित्यत्वकाम्यत्वाभ्यां ज्योतिष्टोमवद्भेदो[१२] भविष्यति। "वसन्ते वसन्ते ज्योतिषा यजेते"ति प्रतिवसन्तं कर्तव्यतया विहितात् नित्याज्ज्योतिष्टोमात् (ज्योतिष्टोमप्रयोगात् ) यथा "ज्योतिष्टोमेन स्वर्गकामो यजेते"ति विहितः काम्यज्योतिष्टोमः (ज्योतिष्टोमप्रयोगः) भिन्नः, तद्वत् भविष्यत्पुराणे–

"श्रावणे बहुले पक्षे कृष्णजन्माष्टमीव्रतम् । न करोति नरो यस्तु भवति क्रूरराक्षसः।।" इत्यकरणे प्रत्यवायश्रवणेन जन्माष्टमीव्रतस्य नित्यत्वात् स्कन्दपुराणे–

"महाजयार्थं कुरुतां जयन्ती मुक्तयेऽनघ।" इत्येवं जयन्त्या काम्यत्वस्मरणाच्च जयन्तीजन्माष्टम्योः नित्यकाम्यज्योतिष्टोमयोरिव भेद इत्युच्येत, तर्हि रोहिणीसंयोगरूपगुणस्यैव

"रोहिणी च यदा कृष्णपक्षेऽष्टम्यां द्विजोत्तम।
जयन्ती नाम सा प्रोक्ता सर्वपापहरा तिथिः।।" इति विष्णुधर्मोत्तरे

जयन्तीपदार्थत्वोक्तेः इन्द्रियकामाधिकरणन्यायेन[१३] जन्मष्टम्याश्रितः

जयन्तीरूपगुणः फलोद्देशेन विधीयेत। कथमपि जयन्तीति न कर्मान्तरमिति प्राप्ते, संज्ञयाकर्मभेद (ज्योतिरधिकरण)[१४] न्यायेन जयन्तीजन्माष्टमीतिसंज्ञाभेदात् कर्मभेदः साधितः। एवं जन्माष्टम्यामुपवासमात्रस्य नित्यत्वेन विहितत्वात् जयन्त्यां च दानपूजादेरपि विधानात् वाजिनन्यायेन गुणादपि कर्मभेद उक्तः। एवं धर्मशास्त्रीयसमस्यानां समाधानं मीमांसान्यायैः कृतम् , इतोऽपि कर्तुं शक्यते च। लौकिकेष्वपि विवादेषु न्यायनिर्णये मीमांसान्यायानां महानुपयोगो वर्तते। अतएव कदाचित् न्यायाधीशा अपि मीमांसाशास्त्रोक्तयुक्त्या न्यायां निरणैषुः। अतिदेशन्यायेन कृतः कश्चिन्निर्णय[१६] उदाह्रियते-

शिक्षकाणां प्रोन्नत्या पूरणीयं पदं रिक्तं चेत् , तस्य पूरणं कर्तव्यं चेत् शिक्षकेषु वरिष्ठस्य प्रोन्नत्या तत् पदं पूरणीयम् । शिक्षकाणां वरीयस्त्वं च नियुक्तिकालमाधृत्य निर्णेतव्यम् । एककाले नियुक्तानां वयसा ज्यायान् वरीयान् भवेदिति अस्ति कविचद्राज्ये नियमः। शिक्षकेतरकर्मचारिणां किञ्चित्पदं प्रोन्नत्या पूरणीयमापतितम् । तत्र द्वौ समानकालनियुक्तौ स्पर्द्धमानौ आस्ताम् । शिक्षकाणां विषये "समानकालनियुक्तयोः वयसा ज्यायान् वरीयानि"ति नियमसत्त्वेऽपि शिक्षकेतरकर्मचारिणां विषये सिद्धो नियमो नास्ति। अतः विनिगमनाविरहे प्राप्ते न्यायालयेन मीमांसाशास्त्रस्थेन अतिदेशन्यायेन निर्णयः प्रदत्तः। मीमांसायां सप्तमाध्यये "यत्र समग्राणि अङ्गानि नोपदिष्टानि तादृशे विकृतिरूपे सौर्यादियागे कथमयं यागोऽनुष्ठेय इति कथंभावाकाङ्क्षायां यत्र समग्राङ्गोपदेशः तस्मात् प्रकृतिरूपाद दर्शपूर्णमासयागात् अङ्गानि अतिदिश्यन्ते। प्रकृतिवद्विकृतिः कर्तव्या (दर्शपूर्णमासवत् सौर्यः कर्तव्यः) इति कल्पितं वचनमेव अतिदेश प्रमाणं भवति" इत्युक्तम्। एवमेव प्रकृतेऽपि शिक्षकेतरकर्मचारिविषये वरीयस्त्वव्यवस्थापकाभावेऽपि शिक्षकाणां वरीयस्त्वानुसारेणैव अत्रापि व्यवस्था कर्तव्येति निर्णयः प्रदत्तः।

**मीमांसान्यायानामसमीचीनसञ्चारेण दुर्निर्णयापत्तिः-**

यथा मीमांसान्यायानां सुष्ठु संचारेण निर्णयः उत्तमः प्रतिष्ठितश्च लभ्यते, एवमेव अनुचितरूपेण न्यायसंचारे निर्णयोऽपि दुष्टो भवेत् । यथा-कदाचित् केनचिदेकपुत्र दत्तः[१७], अन्येन प्रतिगृहीतश्च। धर्मशास्त्रे तु "न त्वेवैकं दद्यात् प्रतिगृह्णीयाद्वा, स हि सन्तानाय पूर्वेषाम्" इति वचनेन एकपुत्रदानप्रतिग्रहौ निषिद्धयेते। परन्तु न्यायाधिकारिणा तत्र "स हि सन्तानाय पूर्वेषामि"ति वचने हिशब्दश्रवणेन "हेतुवान्निगदाधिकरण"न्याय सञ्चार्य तस्य अर्थवादत्वं स्थापयित्वा न तस्य एकपुत्रदानप्रतिग्रहप्रतिषेधपरत्वमित्युक्त्वा एकपुत्रदानप्रतिग्रहौ समर्थितौ।

अस्य न्यायसञ्चारस्य असमीचीनत्वं श्रीमद्भिरनन्तकृष्णशास्त्रिभिरित्थं प्रतिपादितम् – “न ह्यत्र वयं हेतुवान्निगदाधिकरणप्रवृत्तियोग्यतां पश्यामः। न हि हिशब्दार्थः सर्वथा सर्वत्राविवक्षित इति मीमांसकानां सिद्धान्तः। “न ह्यत्रानूयाजा इज्यन्त” इत्यत्र हि हिशब्दार्थो विवक्षित एवेति मीमांसादर्शने व्यक्तम्। ततश्च कस्य न्यायस्य कुत्र विषये प्रवृत्तिरिति विचारणायां हेत्वर्थस्याकाङ्क्षायां तद्विवक्षा तदभावे न तद्विक्षेत्याद्यन्यत्र विस्तृतमिति प्रकृते “न ह्यत्रनूयाजा” इत्यत्रेव हेत्वर्थविवक्षैव संमता। “चतुरूपभृती” त्युक्ते या शङ्का जायते कथं प्रकृताविव नाष्टावुपभृतीति, तन्निरासो “न ह्यत्रान् याज्ञा” इत्यनेन यथा क्रियते, एवमत्रापि एकपुत्रो न देय इत्युक्ते या शङ्का जायते कथं द्वितीय इव स न देय इति, तन्निवर्तनं हि “स हि सन्तानाय पूर्वेषामि”त्यनेन क्रियत इति स्पष्टमि”ति।

यद्यपि अधिकरणिकेन हेतुवान्निगदाधिकरणन्यायसञ्चारः न सम्यक् कृतः, दुर्निर्णयश्च प्रदत्त इति सत्यमेव, परन्तु श्रीमदनन्तकृष्णशास्त्रिभिः कृतं तत्खण्डनमपि असमीचीनमेव। इदं च श्रीमद्भिः डी. तिरुमलताताचार्यैः प्रतिपादितं तेषामेव पङ्क्तिभिरत्रोपस्थाप्यते–

“अत्रेदं वक्तव्यम्[१८]। प्रथमं तावद्यदेव शास्त्रिमहाशयः “स हि सन्तानाय पूर्वेषामि” त्यत्र हेतुवन्निगदाधिकरणन्यायं सञ्चार्यमाणं दृष्ट्वा सहसा तन्निवारणायोत्तिष्ठते सोऽयमस्यापदे संभ्रमः। काममयं मा हेतुविधिर्भूत्। तावता किं प्रतिषेधस्य हीनम्? स खल्वेकपुत्रदानं प्रतिषेत्स्यत्येव। न हि “स हि सन्तानाय” इत्यस्य केवलार्थवादत्वमङ्गीक्रियमाणं “न त्वेकं दद्यादि” त्यस्य एकपुत्रदानप्रतिषेधपरत्वं विहन्तुमीष्टे। प्रत्युत सन्तानाभावप्रसङ्गकृतनिन्दया प्रतिषेधमुत्तभ्नातीति स्पष्टमर्थवादविदाम्। किञ्च हेतुविधित्वाभ्युपगम एवात्र प्रतिषेधार्थमाकुलयति यो यः सन्तानाय भवितुमर्हन्त्येव। अस्य तु वारणाय हेतुवन्निगदाधिकरणन्याय एवानुसर्तव्य इति यथा तस्याधिकरणिकस्य प्रकृते तन्न्यायसञ्चारो निरर्थको विपरीतफलश्च तथा शास्त्रिमहाशयस्य तत्प्रतिषेधोऽपीति द्रष्टव्यमि”ति। एवं श्रीताताचार्याणां पङ्क्तिभ्य ईषदुद्धृत्य मीमांसान्यायसञ्चारशिक्षणमुपस्थापितम्। विस्तरस्तु तैः कृते मीमांसाभ्युदये द्रष्टव्यः।

**मीमांसाया अनुसन्धाने आधुनिकसम्भावनाः–**

विविधेषु विषयेषु जनानां विवादाः, निर्णयापेक्षा च अनाद्यनन्तरूपेण वर्तन्ते। अतो निर्णायकयुक्तिप्रतिपादकमीमांसाशास्त्रस्यापि अनुसन्धाने अनन्ताः सम्भावना विद्यन्ते। तत्तत्कालघट्टे विविधेषु न्यायालयेषु विद्यमानाः समस्याः ज्ञात्वा विद्यमानान् नियमान्

विवरण (डाटा) रूपेण संगृह्य यत्र संभवति, तत्र मीमांसाशास्त्रोक्तन्यायैः अस्माभिः निर्णयाः प्रदातुं शक्यते। कामं ते निर्णयाः अधिकरणिकैरङ्गीक्रियन्तां न वा, अयं प्रयासस्तु अत्यन्तं श्लाघनीयो भविष्यति, कालक्रमेण बहुभिरादृतोऽपि भविष्यतीति मे मतिः।

एवमनुसन्धानेन सह मीमांसाग्रन्थानां, मीमांसासिद्धान्तानां, मीमांसाग्रन्थकाराणां वा विषये याः भ्रान्तयः पाश्चात्यगवेषकानां कारणेन प्रसृताः तासां दूरीकरणपूर्वकं यथार्थख्यापनमयि तदा तदा कर्तव्यं भवति। एतद्दिशि श्रीमद्भिः ताताचार्यैः मीमांसाभ्युदये बहु लिखितं तत एवावगन्तव्यं गवेषकैः। विस्तरभयान्नात्र लिख्यते।

**टिप्पण्यः-**

१. पा.सू. ३।१।६
२. पा.सू. ६।१।९
३. पा.सू. ६।१।१
४. पा.सू. ७।४।६०
५. पा.सू. ७।४।७९
६. पा.सू. ८।३।२४
७. पा.सू. ३।३।१०२
८. पा.सू. ६।१।९७
९. पा.सू. ४।१।४
१०. श्लोकवार्तिकम् – प्रथमसूत्रे प्रथमश्लोकः
११. ग्रन्थास्यास्य मातृका तञ्जावुर् नगरस्थ सरस्वतीमहलग्रन्थालयेऽस्तीति विद्वद्भ्यः श्रुतम्
१२. ज्योतिष्टोमप्रयोगभेदः २।४।१ अधिकरणे निरूपितः
१३. २।२।११ अधिकरणम्
१४. २।२।८ अधिकरणम्
१५. २।२।९ अधिकरणम्
१६. न्यायमूर्ति श्री मार्कण्डेयकाटजू महोदयेन लिखिते निबन्धे क्वचिद् दृष्टम्
१७. इदं शम्भुभट्टीय (प्रभावली) सहितभाट्टदीपिकायाः निवीतान्त-भागपुस्तकभूमिकायां प्रस्तुतम्
१८. मीमांसाभ्युदयः, अनुबन्धेषु पृ. सं. ५२

# श्रीमद्भागवते पारिभाषिकशब्दानां विवेचनम्

डॉ. मखलेशकुमारः
सहाचार्यः (पुराणेतिहासः)

संस्कृतविद्यायां वेदाः अनादिकालतः मूर्ध्नि विराजन्ते इति निर्विवादम् । ऋषयः मन्त्रद्रष्टारः इति वचनेन वेदानामपौरुषेयत्वं सिद्धमिति। एतादृशानां भगवतः निःश्वासभूतानां वेदानां विस्ताराय स्वयं भगवान् नारायणः व्यासरूपेणावतीर्य पुराणानि भूमौ प्रकाशयामास। तदुक्तं ब्रह्मपुराणे-

**विस्ताराय तु वेदानां स्वयं नारायणः प्रभुः।**
**व्यासरूपेण कृतवान् पुराणानि महीतले।।** (ब्रह्मपुराणे-१.१५)

संस्कृतस्य विपुले वाङ्मये पुराणानां बहु महत्त्वं विद्यते। पद्मपुराणे एतेषां पुराणानां सर्वलोकातिशायित्वं सर्वविधज्ञानोपपादकत्वं, ब्रह्मणा प्रथमस्मृतत्वञ्च सुप्रकाशितम् । तद्यथा-

**पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम् ।**
**उत्तमं सर्वलोकानां सर्वज्ञानोपपादकम् ।।** (पद्मपुराणे-१-१४)

मत्स्यपुराणमपि वचनमेतद् समर्थयति-

**पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम् ।**
**नित्यं शब्दमयं पुण्यं शतकोटिप्रविस्तरम् ।।** (मत्स्यपुराणे-३.३)

वेदवत् पुराणानामपि भगवतः निःश्वासभूतत्वं बृहदारण्यकोपनिषदि कथितम्। तद्यथा-

**अरेऽस्य महतो भूतस्य निःश्वसितमेतद् ऋग्वेदो यजुर्वेदः**
**सामवेदोऽथर्वाङ्गिरस इतिहासं पुराणं विद्या उपनिषदः।**
(बृहदारण्यके.२.४.१०)

अङ्गैः सहितानां वेदानां सर्वेषामुपनिषदामभिज्ञोऽपि यावत्पुराणानां ज्ञानं न प्राप्नोति तावद् स विचक्षणो भवितुं नार्हति। तदुक्तं पद्मपुराणे-

यो विद्याच्चतुरो वेदान् साङ्गोपनिषदो द्विजः।
न चेत्पुराणं संविद्यान्नैव स स्याद्विचक्षणः।। (पद्म.पु.सृ.ख.२.५१)

पुराणानां महत्त्वमुद्घोषयन् न्यायदर्शनभाष्ये वात्स्यायनोऽपि लिखति यत्, य एव मन्त्रब्राह्मणस्य द्रष्टारः प्रवक्तारश्च ते खल्वितिहासपुराणस्य धर्मशास्त्रस्य चेति विषयव्यवस्थापनाच्च प्रमाणम् । यज्ञो मन्त्रब्राह्मणस्य, लोकवृत्तमितिहासपुराणस्य, लोकव्यवहारस्थापनं धर्मशास्त्रस्य च विषयः।

उपर्युक्तैः वचनैः सिद्धमिति यत् पुराणविद्यापि वेदवदतिप्राचीना प्रामाणिकी समादरणीया च वर्तते। अनया विना वैपश्चित्यस्य कल्पना व्यर्था निर्मूला च भविष्यति। संस्कृतविद्यायाः क्षेत्रं बहुविस्तृतं वर्तते। भारतीयसंस्कृतौ चतुर्दशविद्यास्थानानि अष्टादशविद्यास्थानानि च परिगणितानि सन्ति।

विष्णुपुराणे विद्यागणनाप्रसङ्गे कथितं यत् ऋग्यजुर्सामाथर्वेति चत्वारः वेदाः, शिक्षा-कल्प-निरुक्त-व्याकरण-छन्द-ज्योतिषमिति षड् वेदाङ्गानि, मीमांसा-न्याय-पुराण-धर्मशास्त्रमिति चतुर्दशविद्यास्थानानि भवन्ति। एतासु आयुर्वेद-धनुर्वेद-गान्धर्ववेदेति त्रयः उपवेदाः एवमर्थशास्त्रञ्चेति मेलनेन एता अष्टादश विद्याः भवन्ति। तद्यथा-

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश।।
आयुर्वेदो धनुर्वेदो गान्धर्वश्चैव ते त्रयः।
अर्थशास्त्रं चतुर्थं तु विद्या ह्यष्टादशैव ताः।। (वि.पु. ३.६.२८-२९)

भागवते तु उपवेदान् विगणयन् अर्थशास्त्रस्य स्थाने स्थापत्यस्य नाम कथितम् -

आयुर्वेदं धनुर्वेदं गान्धर्ववेदमात्मनः।
स्थापत्यं चासृजद् वेदं क्रमात्पूर्वादिभिर्मुखैः।। (श्रीमद्भा. ३.१२.३८)

महर्षिः याज्ञवल्क्यस्तु चतुर्दशविद्यागणनायां पुराणानां प्राथम्यमुद्घोषयति। तद्यथा-

पुराणं न्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश।। (याज्ञ.स्मृ. १.३)

एवं विवेचनेन स्पष्टं यद् संस्कृतविद्यासु पुराणानां महत्वपूर्णस्थानं वर्तते। सर्वप्रथमं देवलोके शतकोटिप्रविस्तरं नित्यं शब्दमयं पुराणमासीत् । प्रतिद्वापरं भगवान् एव व्यासः भूत्वा पुराणमेकं चतुर्लक्षप्रमाणेन अष्टादशधा कृत्वा प्रकाशयति। श्रीमद्भागवते अष्टादशपुराणानि परिगणितानि। तद्यथा-

ब्राह्मं पाद्मं वैष्णवं च शैवं लैङ्गं सगारुडम् ।
नारदीयं भागवतमाग्नेयं स्कान्दसंज्ञितम् ।।
भविष्यं ब्रह्मवैवर्तं मार्कण्डेयं सवामनम् ।
वाराहं मात्स्यं कौर्मं च ब्रह्माण्डख्यमिति त्रिषट् ।।

(श्रीमद्भा. १२.७.२३.२४)

अष्टादशपुराणेषु श्रीमद्भागवतमहापुराणस्य स्थानं पुराणतिलकरूपेण वर्तते। सृष्ट्यादौ भवभीताय नाभिपङ्कजे ब्रह्मणे पुराणमेतद् भगवता कारुण्याद् प्रकाशितम् । तदुक्तं भागवते–

इदं भगवता पूर्वं ब्रह्मणे नाभिपङ्कजे।
स्थिताय भवभीताय कारुण्यात् सम्प्रकाशितम् ।।

(श्रीमद्भा. १२.१३.१०)

सर्वेषु शास्त्रेषु पारिभाषिकाः शब्दाः भवन्ति। पारिभाषिकशब्दानामर्थावबोधस्तु तत्तच्छास्त्रानुसारेणैव सुकरो भवति। पुराणसंहितायाः निर्माणं अष्टादशपुराणानां प्रणयनमिति कार्यद्वयं विद्यते। आख्यानोपाख्यानगाथाकल्पशुद्धिभिः पुराणार्थविशारदाः पुराणसंहितां रचितवन्तः। तर्हि कः विद्यते पुराणसंहितायाः कर्ता इति जिज्ञासायां विष्णुपुराणानुसारं व्यासः एव प्रतिभाति। यतो हि तस्य व्यासस्य प्रख्यातः शिष्यः रोमहर्षणः सूत आसीत् । एतस्मै सूताय महामतिः व्यासः संहितां ददौ। तदन्तरं सूतोऽपि संहितां रचयामास। तस्य सूतस्य सुमतिः अग्निवर्षा मित्रायुः शांसपायनः अकृतव्रणः सावर्णिश्चेति षट् शिष्याः अभवन् । एतेषु षट्शिष्येषु शांसपायनः सावर्णिः अकृतव्रणश्चापि स्व-स्वसंहितां निर्मितवन्तः। एतासां तिसृणामाधारभूता सूतसंहिता रोमहर्षणेन निर्मिता एव आसीत् । तद्यथा–

प्रख्यातो व्यासशिष्योऽभूत्सूतो वै रोमहर्षणः।
पुराणसंहितां तस्मै ददौ व्यासो महामतिः।।
सुमतिश्चाग्निवर्चाश्च मित्रायुश्शांसपायनः।
अकृतव्रणसावर्णी षट् शिष्यास्तस्य चाभवन् ।।
काश्यपः संहिताकर्ता सावर्णिश्शांसपायनः।
रोमहर्षणिका चान्या तिसृणां मूलसंहिता।। (वि.पु. ३.६. २८–२९)

नैमिषारण्ये व्यासशिष्यः सूतः एव शौनकादिमुनीन् प्रति पुराणानि उपदिष्टवानिति **"एकदा नैमिषारण्ये ऋषभः शौनकादयः, प्रपच्छुर्मुनय सर्वे सूतं पौराणिकं खलु"** इति पारम्परिकपुराणवचनानुसारं ज्ञायते यत् ऋषीणां सत्रे नैमिषारण्ये भावित्वात् कुशाग्रेण लोमहर्षणसूतस्य वधः बलरामेण जातः। तद्यथा–

**एतावदुक्त्वा भगवान् निवृत्तोऽसद्वधादपि।**
**भावित्वात्तं कुशाग्रेण करस्थेनाहनत् प्रभुः।।** (श्रीमद्भा. १०.७८.२८)

तदा हाहेति वादिनः मुनयः सङ्कर्षणमूचुः, यदस्मै सत्रसमाप्तिं यावदस्माभिः ब्रह्मासनं शारीरिककष्टरहितमायुश्च दत्तम् । अजानता भवता ब्रह्मवधः आचरितः। ऋषीणां निवेदनं श्रुत्वा सत्रस्य सततप्रवर्तनाय तदा **आत्मा वै जायते पुत्रः** इति वचनानुसारं सूतपुत्रमुग्रश्रवां व्यासासने कृत्वा बलरामः मुनीनां कथनानुसारं स्वयं द्वादशमासान् यावत् तीर्थयात्रां कृत्वा ब्रह्महत्यया निर्मुक्तरभवत् ।

अनेन वर्णनेन स्पष्टं यद् सूतपुत्रः उग्रश्रवा अपि पौराणिकः आसीत् । श्रीमद्भागवतं तु शौनकादिमुनीन् प्रति सौतिः एव श्रावितवान् । शौनकं प्रति **श्रुणु पौराणिकान् मुने** इति उक्त्वा सः कथयति–

**त्रय्यारुणिः कश्यपश्च सावर्णिरकृतव्रणः।**
**वैशम्पायनहारीतौ षड् वै पौराणिका इमे।।**
**अधीयन्त व्यासशिष्यात् संहितां मत्पितुर्मुखात् ।**
**एकैकामहमेतेषां शिष्यः सर्वाः समध्यगाम् ।।**
**कश्यपोऽहं च सावर्णी रामशिष्योऽकृतव्रणः।**
**अधीमहि व्यासशिष्याच्चतस्त्रो मूलसंहिताः।।**

(श्रीमद्भा. १२.७.५–७)

अर्थात् त्रय्यारुणिः कश्यपः सावर्णिः अकृतव्रणः वैशम्पायनः हारीतश्चेति षड् पौराणिकाः। एते मत्पितुः मुखात् साक्षाद्व्यासशिष्यात् सूतात् संहितामधीयन्त। एतेषां शिष्योऽहं सर्वाः षड् संहिताः समध्यगाम् , तथा च कश्यपः सावर्णिः अकृतव्रणः अहं च अन्या चतस्त्रः मूलसंहितारपि व्यासशिष्यात् अधीमहि। एवं प्रकारेण वेदसंहितावत् काश्चन संहिताग्रन्थाः यथा पुराणसंहिता, व्याससंहिता, सूतसंहिता च इदानीमपि प्राप्यते। **अष्टादशपुराणानां कर्त्ता सत्यवतीसुतः** इत्यनुसारं व्यासकर्तृकाः अष्टादशपुराणग्रन्थाः प्राप्यन्ते एव। पुराणानां वर्ण्यविषयत्वेन पञ्चलक्षणानि प्रसिद्धानि।

सर्वमान्यपुराणलक्षणमेतद् किञ्चित्पाठभेदेन यत्खलु बहुषु पुराणेषु प्राप्यते। तद्यथा–

**सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।**
**वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ।।** (मार्क. पु. १३४.१३)

श्रीमद्भागवते तु स्थानद्वये पुराणानां दशलक्षणानि कथितानि, तयोः शब्दभेदं परिलक्ष्यते। तदुक्तं–

**अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः।**
**मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः।।**
**दशमस्य विशुद्ध्यर्थं नवानामिह लक्षणम् ।**
**वर्णयन्ति महात्मानः श्रुतेनार्थेन चाञ्जसा।।** (श्रीमद्भा. २.१०.१–२)

अन्यत्र द्वादशस्कन्धेऽपि–

**पुराणलक्षणं ब्रह्मन् ब्रह्मर्षिभिर्निरूपितम् ।**
**श‍ृणुष्व बुद्धिमाश्रित्य वेदशास्त्रानुसारतः।।**
**सर्गोऽस्याथ विसर्गश्च वृत्ती रक्षान्तराणि च।**
**वंशो वंशानुचरितं संस्था हेतुरपाश्रयः।।**
**दशभिर्लक्षणैर्युक्तं पुराणं तद्विदो विदुः।**
**केचित् पञ्चविधं ब्रह्मन् महदल्पव्यवस्थया।।** (श्रीमद्भा. १२.७.८–१०)

एवम्प्रकारेण आख्यानोपाख्यानगाथाकल्पशुद्धयश्च पुराणोपकरणानि तथा च पुराणलक्षणेषु समागताः सर्ग–विसर्ग–स्थान–वृत्ति–पोषण–रक्षा–ऊति–हेतु–अन्तराणि–मन्वन्तर–वंश–वंशानुचरित–ईशानुकथा–निरोध–संस्था–प्रतिसर्ग–मुक्ति–आश्रय–अपाश्रयादिपारिभाषिकशब्दाः श्रीमद्भागवतमाश्रित्य विवेच्यन्ते।

**आख्यानमुपाख्यानञ्च–** एतयोः द्वयोः प्रयोगस्तु कथानकस्य कृते विद्यते, परन्तु द्वयोर्मध्ये पर्याप्तः मतभेदोऽपि वर्तते। तद्यथा–

**स्वयं दृष्टार्थकथनं प्राहुराख्यानं बुधाः।**
**श्रुतस्यार्थस्य कथनमुपाख्यानं प्रचक्षते।।** (अष्टादशपुराणदर्पणे २५)

श्लोकस्यास्य टीकायां स्वामिना श्रीधरेण एकः प्राचीनः श्लोक उद्धृतः। येन आख्यानोपाख्यानयोरन्तरं स्पष्टो भवति। यस्यार्थस्य साक्षात्कारः स्वयं वक्त्रा कृतः तदाख्यानं कथ्यते। यो हि अर्थो वक्त्रा व्यक्त्यन्तरेण श्रुतः स उपाख्यानं भवति।

उपर्युक्तविवेचनानुसारं मर्यादापुरुषोत्तमस्य श्रीरामचन्द्रस्य, सत्यव्रतस्य राज्ञो हरिश्चन्द्रस्य, धर्मिष्ठस्य राज्ञः ययातेश्च कथानकं परम्परया श्रुतकारणात् रामोपाख्यानं,

हरिश्चन्द्रोपाख्यानं ययात्युपाख्यानञ्चोच्यते। अन्येषां विदुषां मते तु भेदोऽयं न दृष्टश्रुतकारणकः वर्तते, अपि तु महदल्पाकारको भवति। आकारेण यद् कथानकं महदस्ति तदाख्यानं, स्वाल्पाकारकं एकदेशवर्तिनं कथानकमुपाख्यानं निगद्यते, अर्थात् रामायणे रामचन्द्रस्य कथानकमाख्यानं तत्रैव बालिसुग्रीवयोः एकदेशवर्तिनं कथानकमुपाख्यानं कथ्यते।

**गाथा-** प्राचीनसाहित्येषु अनेकानि पद्यानि प्राप्यन्ते, येषां कर्तृणां नामानि नोपलभ्यन्ते। अतः अज्ञातकर्तृकाणां लोकप्रख्यातानां वैशिष्ट्यबोधकानां श्लोकानां संज्ञा गाथा इति। एतादृशासु पुराणगाथासु केषाञ्चिम्महापुरुषाणां सार्वभौमं जीवनदर्शनं संक्षेपतः एकस्मिन् द्वयोर्वा श्लोकयोः प्रकटीकृतं भवति। प्रायः एताः गाथाः प्राचीनकालतः सम्बद्धाः सत्यः कस्याश्चित् विशिष्टव्यक्तेः वैशिष्ट्यादिकं वर्णयन्ति। ऋग्वेदे तु एतादृश्यः गाथाः नाराशंसी इति पदवाच्याः भवन्ति। व्यासमुनिः एतादृशीनां गाथानामुपयोगः पुराणसंहितानिर्माणेऽकरोत् । यथा वायुपुराणे पितृगाथा-

**एष्टव्या बहवः पुत्र यद्येकोऽपि गयां व्रजेत् ।**
**यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ।।**
**गयां यास्यति यः पुत्रः सःनस्त्राता भविष्यति।**
**गयाप्राप्तं सुतं दृष्ट्वा पितॄणामुत्सवो भवेत् ।।** (वायु.पु. १०५.९-१०)

मत्स्यपुराणेऽपि-

**अपि स्यात् स कुलेऽस्माकं यो नो दद्याज्जलाञ्जलिम् ।**
**नदीषु बहुतोयासु शीतलासु विशेषतः।।** (मत्स्यपु.- २०३.३)

राजा ययातिरपि स्वजीवनस्यानुभवं अनया गाथया स्पष्टीकृतवान् -

**न जातु कामः कामानामुपभोगेन शाम्यति।**
**हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते।।** (श्रीमद्भा. ९.१९.१४)

एवम्प्रकारेण पुराणेषु गाथा सम्बन्धिनः बहव श्लोकाः दृश्यन्ते।

**कल्पशुद्धिः-** शब्दस्यास्य तात्पर्यनिर्णये मतभेदो विद्यते, यतो हि अस्य स्थाने कल्पजोक्तिः इत्यपि प्रयोगः विद्यते। प्रसिद्धटीकाकारः स्वामी श्रीधरः कल्पशुद्धिः पदस्यार्थः श्राद्धकल्पमिति कृतवान् । पं. मधुसूदन-ओझामहोदयास्तु कल्पशुद्धिपदेन सम्पूर्णं धर्मशास्त्रं स्वीकुर्वन्ति। एतेषां मते कल्पस्य तात्पर्यं एतन्नामकं वेदाङ्गमिति यस्मिन् श्रौत-गृह्य-धर्मसूत्रादीनां समावेशः भवति। शुद्धिः पदेन तु षड्विधा शुद्धिः स्वीक्रियते,

तद्यथा–मलशुद्धिः स्पर्शशुद्धिः अघशुद्धिः एनः शुद्धिः आत्मशुद्धिः मनश्शुद्धिश्च।

एवम्प्रकारेण पुराणसंहितानिर्माणे भगवता व्यासदेवेन आख्यानो-पाख्यानगाथाकल्पशुद्धीनां सम्यगुपयोगः कृतः, यतो हि इमानि पुराणानां स्त्रोतांसि उपादानानि उपकरणानि वा भवन्ति। इतः परं पुराणलक्षणे समागतानां शब्दानां विवेचनं प्रारभ्यते।

**सर्गः** – सर्गो नाम कारणसृष्टिः। ब्रह्मणः प्रेरणया गुणेषु क्षोभकारणात् भूतमात्रेन्द्रियधियां जन्म सर्गः कथ्यते। अस्य क्रमो यथा गुणत्रयसाम्यावस्थापन्नायां प्रकृतौ पुरुषस्य प्रेरणया क्षोभकारणात् महत्तत्वस्याविर्भावः, महत्तत्वादहङ्कारः, ततः एकादशेन्द्रियाणि, पञ्चतन्मात्राश्च, पञ्चतन्मात्राभ्यः पञ्चमहाभूतान्युत्पद्यन्ते, इत्येव तत्त्वोत्पत्तिक्रमः सर्गः इति। तदुक्तम्–

**अव्याकृतगुणक्षोभान्महतस्त्रिवृतोऽहमः।**
**भूतमात्रेन्द्रियार्थानां सम्भवः सर्ग उच्यते।।** (श्रीमद्भा. १२.७.११)

द्वितीये स्कन्धेऽपि–

**भूतमात्रेन्द्रियधियां जन्म सर्ग उदाहृतः।**
**ब्रह्मणो गुणवैषम्याद् ------।।** (श्रीमद्भा. २.१०.३)

**विसर्गः**– विसर्गो पौरुषः स्मृतः, इत्यनुसारं पुरुषेण जातेन ब्रह्मणा कृता चराचरप्राणिनां सृष्टिः विसर्गः उच्यते। विशिष्टः सर्गः विसर्गः अर्थात् कार्यसृष्टिः इति। परमात्मनः अनुग्रहणेन ब्रह्मणा सदसद्वासनाप्राधान्येन बीजाद्बीजमिव प्रवाहापन्नं यत् चराचरात्मकं जगदुत्पद्यते तद्विसर्गपदवाच्यं भवति। तदुक्तं–

**पुरुषानुगृहीतानामेतेषां वासनामयः।**
**विसर्गोऽयं समाहारो बीजाद् बीजं चराचरम् ।।** (श्रीमद्भा. १२.७.१२)

**वृत्तिः**– प्राणिनां जीवननिर्वाहसामग्री वृत्तिः कथ्यते। जीवननिर्वाहार्थं चराणां प्राणिनामचराणि भूतान्येव वृत्तिः। गोधूम–तण्डुल–फलादीन् सर्वविधाः जीवनसामग्रीः वृत्तेरन्तर्गता भवन्ति। एतासु वृत्तिषु मनुष्यः काश्चन वृत्तयः स्वेच्छानुसारं तथा च काश्चन शास्त्रप्रेरणया स्वीकृतवान् । उभयविधवृत्तेरूद्देश्यं जीवनधारणमेव। तदुक्तं–

**वृत्तिर्भूतानि भूतानां चराणामचराणि च।**
**कृता स्वेन नृणां तत्र कामाच्चोदनयापि वा।।** (श्रीमद्भा. १२.७.१३)

**रक्षा**– रक्षायाः सम्बन्धस्तु भगवदवतारेभ्यः भवति। युगे–युगे भगवान् पशुपक्षिमनुष्यर्षिदेवतादिरूपेणावतीर्य विविधां लीलां समुपस्थापयन् त्रयीद्विषः विनाश्य

धर्मं संरक्षयति। तदुक्तं-

**रक्षाच्युतावतारेहा विश्वस्यानुयुगे युगे।**
**तिर्यङ्मर्त्यर्षिदेवेषु हन्यन्ते यैस्त्रयीद्विषः।।** (श्रीमद्भा. १२.७.१४)

**मन्वन्तरम्** - पुराणानुसारेण चतुर्दशमनवः भवन्ति। अन्यः मनुः मन्वन्तरम्। मनुरित्यादिषड्विधं मन्वन्तरमुच्यते। एते मन्वादयः षड्वर्गाः स्व-स्वाधिकारे यदा प्रवर्त्तन्ते सः कालः मन्वन्तरमित्युच्यते। **मन्वन्तराणि सद्धर्म** इति भागवतवचनानुसारं सद्धर्मयोः प्रवर्तनं मन्वन्तरमिति। सृष्टेः विविधकालमानस्य द्योतकोऽयं शब्दः। मनुः मनुपुत्राः ऋषयः, देवाः, इन्द्रः, भगवतः अंशावतारश्चेत्येवं षड्विशेषताभिः विशिष्टः कालः मन्वन्तरं भवति। प्रत्येकं मन्वन्तरस्य अधिपतिः कश्चन् मनुः, तथा च मनुपुत्राः सप्तर्षयः देवाः इन्द्रः भगवतः अवतारादयश्च तस्य मनोः सहयोगिनः सन्तस्तन्मन्वन्तरं पालयन्ति। तदुक्तं-

**मन्वन्तरं मनुर्देवा मनुपुत्राः सुरेश्वरः।**
**ऋषयोंऽशावतारश्च हरेः षड्विधमुच्यते।।** (श्रीमद्भा. १२.७.१५)

**वंशः**- ब्रह्मणः सकाशाद् जातानां भूतभविष्यवर्तमानानां राज्ञाम् ऋषीणाञ्च सन्तानपरम्परा वंशपदवाच्या भवति। तदुक्तं-

**राज्ञां ब्रह्मप्रसूतानां वंशस्त्रैकालिकोऽन्वयः।** (श्रीमद्भा. १२.७.१६)

भागवते तु केवलं राज्ञां त्रैकालिकोऽन्वयमात्रमेव निर्दिष्टं, परन्तु पुराणान्तरे ऋषीणामपि ग्रहणात् वंशपरम्परायां तेषामपि समावेशः समुचितः प्रतिभाति।

**वंशानुचरितम्** - राज्ञादिवंशेषु जायमानानां विशिष्टपुरुषाणां वंशधराणाञ्च महत्त्वं विवरणञ्च यत्रोपलभ्यते तद्वंशानुचरितमिति। तदुक्तं-

**वंशानुचरितं तेषां वृत्तं वंशधराश्च ये।।** (श्रीमद्भा. १२.७.१६)

**संस्था**- ब्रह्माण्डस्य लयः संस्था पदेनाभिधीयते। एषा संस्था चतुर्विधा भवति। अस्य ब्रह्माण्डस्य स्वभावादेव प्रलयः जायते। नैमित्तिकप्रलय-प्राकृतिकप्रलय-नित्यप्रलय-आत्यन्तिकप्रलयभेदेन प्रलयः चतुर्विधः भवति। तदुक्तं-

**नैमित्तिकः प्राकृतिको नित्य आत्यन्तिको लयः।**
**संस्थेति कविभिः प्रोक्ता चतुर्धास्य स्वभावतः।।** (श्रीमद्भा. १२.७.१७)

**हेतुः**- अनेन शब्देन जीवस्येव ग्रहणं भवति। अविद्यया कर्मणि आसक्तः जीवः विश्वसर्गप्रतिसर्गयोः कारणमिति। अनेन कारणेनैव श्रीमद्भागवते सः हेतुरिति सार्थकेन पदेन अभिधीयते। एवं जीवं ये तत्त्वदृष्ट्या पश्यन्ति ते तु अनुशयी साक्षी वा

स्वीकुर्वन्ति, तथा चोपाधितयावलोकयितारः एनमव्याकृतमामनन्ति। तदुक्तं-

**हेतुर्जीवोऽस्य सर्गादेरविद्याकर्मकारकः।**
**यं चानुशयिनं प्राहुरव्याकृतमुतापरे।।** (श्रीमद्भा. १२.७.१८)

**अपाश्रयः-** ब्रह्मणः महनीयत्वाभिधानः अपाश्रयः इति। उक्तञ्च श्रीमद्भागवते-

**व्यतिरेकान्वयो यस्य जाग्रत्स्वप्नसुषुप्तिषु।**
**मायामयेषु तद् ब्रह्म जीववृत्तिष्वपाश्रयः।।** (श्रीमद्भा. १२.७.१९)

श्लोकस्यास्य टीकायां स्वामी श्रीधरः लिखति, **यत् जाग्रदादिस्ववस्थासु जीवतया वर्तन्ते इति जीववृत्तयः विश्व-तैजस-प्राज्ञाः। तेषु मायामयेषु साक्षितयान्वयः समाध्यादौ च व्यतिरेको यस्य तद् ब्रह्म संसार-प्रतीति-बाधयोरधिष्ठानावधिभूतमपाश्रय उच्यते।** जाग्रतस्वप्नसुषुप्तिरिति तिस्रः अवस्थाः जीवस्य भवन्ति। तर्हि यत्तिसृषु अवस्थासु विश्वतैजसप्राज्ञरूपेण विराजते, तथा च ततः परं तुरीयतत्त्वरूपेणापि साक्षितया लक्ष्यते, तदेव ब्रह्म अत्र अपाश्रय शब्देनोच्यते।

**स्थानम् -** एतद्वृत्तेरन्तर्गतमिति। **स्थितिर्वैकुण्ठविजयः** इति श्रीमद्भागवद्वचनेन वैकुण्ठस्य भगवतः विजयः स्थितिः स्थानं वा कथ्यते। भगवता निर्मितं ब्रह्माण्डं मर्यादाभ्यन्तरे एव समुत्कर्षं प्राप्नोति। भुवनकोशस्य साङ्गोपाङ्गा लोकादयः सर्वेऽपि विषया स्थानस्यान्तर्गताः भवन्ति।

**पोषणम् -** श्रीमद्भागवतस्य द्वितीयस्कन्धे **पोषणं तदनुग्रहः** इत्युक्तमर्थात् भगवतः अहैतुकरनुग्रहः पोषणमुच्यते। विविधतापपरिपीडितानां जीवानामुपरि भगवान् हेतुरहितां कृपां वर्षयति। भागवतस्य षष्ठे स्कन्धे तु मनुष्यदेवदैत्यानां कृते भगवतः नैसर्गिककृपायाः विस्तृतं वर्णनमुपलभ्यते। तत्र अजामिलसदृशं पापाचाररतं मानवं गुरुद्रोहकर्त्तारं विश्वरूपब्राह्मणहन्तारं देवराजमिन्द्रं तथा च दुराचारिणं दैत्यं वृत्रासुरम्प्रति स्वाचिन्त्यशक्तिमयीकृपायाः विलासं दर्शयित्वा भगवान् एतेषां त्रयाणामुद्धारं साधितवान्।

**ऊतयः-** भगवतः कृपायाः वृष्टिः सर्वदा जायते, तर्हि सुखमात्रमेवाभिलषन् जीवः किमर्थं दुःखी भवति? दुःखस्य कारणमूतयः एव भवन्ति। उक्तञ्च भागवते **ऊतयः कर्मवासनाः** इति। कर्मकर्त्तुं उत वा करणानन्तरं जीवे या तद्विषयणी वासना जायते सा भगवत्कृपायाः प्रतिपक्षिणी भवति। एषा वासना शुभाशुभवासनाभेदेन द्विविधा। शुभवासनायाः दृष्टान्तः प्रह्लादः, यः मातुः गर्भे एव नारदस्य सत्सङ्गं सम्प्राप्य असुरः भूत्वाऽपि भगवद्भक्तिं कृत्वा भगवन्तमवाप्तवान्। अशुभवासनायाः दृष्टान्तौ जयविजयौ इति। तौ भगवतः

द्वारपालौ भूत्वाऽपि सनत्कुमारैः द्वेषकारणात् त्रिषु जन्मसु क्लेशभागौ जातौ।

**ईशानुकथा–** भगवतः अवताराणां च तदनुवर्तिनां भक्तानाञ्च पावनं चरितमेव ईशानुकथा भवति। तदुक्तं–

**अवतारानुचरितं हरेश्चास्यानुवर्तिनाम् ।**

**सतामीशकथाः प्रोक्ता नानाख्यानोपबृंहिताः।।** (श्रीमद्भा. २.१०.५)

मन्वन्तरानन्तरं मन्वन्तरं, कल्पानन्तरं कल्पञ्चेति सततप्रवाहमानं भवति। एवं प्रवाहमाने सृष्टौ निमग्नः जीवः भगवतः लीलाकथामाध्यमेन भगवन्तं प्राप्नोति।

**निरोधः–** अस्य आत्मनः जीवस्य हरेर्योगनिद्रामनु इन्द्रियादिभिः रूपादिभिः सह भगवति शयनं लयः निरोधः कथ्यते। तदुक्तं–

**निरोधोऽस्यानुशयनमात्मनः सह शक्तिभिः।** (श्रीमद्भा. २.१०.६)

**मुक्तिः–** अविद्याध्यस्तं रूपमन्यथारूपं कथ्यते। जीवः संसारदशाया देहेन्द्रियैः अध्यस्तः सन् आत्मानं देहमिन्द्रियं वा मनुते। एतदेव तस्य अन्यथारूपमिति। परन्तु यदा स्वस्य स्वरूपं ज्ञात्वा पुनः सद्रूपे स्वात्मनि अधिरोहति तदेव मुक्तिः कथ्यते। तदुक्तं–

**मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थितिः।** (श्रीमद्भा. २.१०.६)

ऋते ज्ञानान्न मुक्तिः इत्यनुसारं अध्यासजन्यमिथ्याज्ञानेन निर्मुक्तः जीवः एव यथार्थज्ञानेन सच्चिदानन्दे परमात्मनि प्रतिष्ठितः सन् मुक्तिपदभाक् भवति।

**आश्रयः–** यतः चराचरस्य जगतः आभासः अर्थात् सृष्टिः चकारात् स्थितिपोषणादयः एवञ्च निरोधो लयः अर्थात् मुक्तिश्च प्रकाशते। यश्च परब्रह्म परमात्मेति प्रसिद्धः, सः एव आश्रयः इति कथ्यते। तदुक्तं–

**आभासश्च निरोधश्च यतश्चाध्यवसीयते।**

**स आश्रयः परं ब्रह्म परमात्मेति शब्द्यते।।** (श्रीमद्भा. २.१०.७)

**प्रतिसर्गः–** सर्गः सृष्टिः तस्य वैपरीत्यमर्थात् प्रलयः प्रतिसर्गः कथ्यते। दृश्यमानस्य प्रपञ्चस्य अभावः प्रलयः इति। श्रीमद्भागवतानुसारेण संस्थापद्वाच्य एषः प्रतिसर्गः नित्यनैमित्तिकप्राकृतिकात्यन्तिकप्रलयभेदेन चतुर्विधः भवति। प्रतिसर्गस्य स्थाने श्रीमद्भागवते प्रतिसंक्रमः, विष्णुपुराणे प्रतिसञ्चरश्च प्रयुक्तः। तद्यथा–

**कालद्रव्यगुणैरस्य त्रिविधः प्रतिसंक्रमः।** (श्रीमद्भा. ३.१०.१४)

विष्णुपुराणस्य मतमस्ति यत् प्रतीयमानं जगत् गतप्रलये प्रकृतौ लीनमासीद्, एतस्मात् कारणात् प्रपञ्चस्य एषः लयः प्राकृतप्रलयः कथ्यते। तदुक्तं–

**प्रकृतौ संस्थितं व्यक्तमतीतप्रलये तु यत् ।**
**तस्मात्प्राकृतसंज्ञोऽयमुच्यते प्रतिसञ्चरः।।** (वि.पु. १.२.२५)

श्रीमद्भागवते स्थानद्वये पुराणलक्षणमभिहितम् । तत्र द्वितीयस्कन्धे साक्षादभिहितं यत् दशमस्य आश्रयतत्त्वस्य विशुद्ध्यर्थमेव अन्येषां नवानां सर्गादीनां वर्णनमावश्यकं वर्तते। एवं पुराणप्रतिपाद्यै एतैः सर्वैः विषयैः प्राप्यः परमात्मा परब्रह्म एव। यतो हि व्यापकत्वात् भगवान् अन्तर्यामितया आत्मरूपेण सर्वेषु जागतिकविषयेषु वर्तते। **तत्सृष्ट्वा तदेवानुप्राविशत्** वचनमिदमभिलक्ष्य श्रीमद्भागवते कथितं यत् आकाश-वायु-अग्नि-सलिल-मही-नक्षत्र-प्राणि-दिक्-वृक्ष-सरित्समुद्रादयः हरेः शरीरं वर्तते। यतो हि सर्वविधस्वरूपैः भगवान् एव प्रकटितः अस्ति। अतः प्राणिनमप्राणिनम्प्रति अवश्यमेव परमात्मभावेन प्रणतिं निवेदयेत् । तदुक्तं-

**खं वायुमग्निं सलिलं महीं च,**
**ज्योतींषि सत्त्वानि दिशो द्रुमादीन् ।।**
**सरित्समुद्रांश्च हरेः शरीरं,**
**यत्किञ्च भूतं प्रणमेदनन्यः।।** (श्रीमद्भा. ११/२/४१)

श्रीमद्भागवतमहापुराणं पुराणतिलकत्वेन विद्वद्भिः स्वीकृतम् । **विद्यावतां भागवते परीक्षा** उक्तिरियमस्य वैशिष्ट्यं प्रकाशयति। देवर्षेः नारदस्योपदेशेन समाधिमग्नः महर्षिः व्यासः पुराणमेतद् रचयित्वा निवृत्तिनिरतं मुनिं शुकमध्यापयामास। एतादृशं महनीयपुराणमाश्रित्य पुराणविद्यायां वर्णितानां प्रमुखानां पारिभाषिकशब्दानां दिङ्मात्रावलोकनं कृतमिति शम् ।



# पाण्डुलिपिः का?

डॉ. दे. दयानाथः
सहायकाचार्यः (सं), वेदविभागः

चिरपरिचितोऽयं शब्दः पाण्डुलिपिरिति। विशिष्य अप्रकाशितग्रन्थसम्पादकेषु अनुसन्धातृषु च सुतरां व्यवहारे दृश्यते। अस्मिन् क्षेत्रे फग्युर्सन् , व्यूहलर, पीटर्सन्, बर्नल्, प्रभृतयः भण्डारकर, गणपतिशास्त्री, सुब्रह्मण्यशास्त्री प्रभृतयः भारतीयाश्च प्रसिद्धाः श्रूयन्ते। पाण्डुलिपिः विविधासु लिपिषु उपलभ्यते। शारदा, नेवारी, ब्राह्मी, खरोष्ठी, ग्रन्थः, नन्दिनागरी प्रभृतयः लिपयश्च प्रसिद्धाः, यासु अनन्तवाङ्मयं प्राप्यते च। भारते पुरा सर्वं शास्त्रवाङ्मयं वाक्परम्परया एव प्रावर्तत। पश्चात् लेखनप्रक्रिया समारभत।

भारते यद्यपि सर्वं विद्याजातं वाक्परम्परया एव प्रवर्तते स्म तथापि प्राचीनभारतीयानां लिपिज्ञानं नासीदिति वक्तुं न शक्यते। यतः श्रुतिपरम्परया एव रक्षणीयं वाङ्मयमिति सङ्कल्पेन लेखनं न कृतमिति वक्तुं कारणं वर्तते। तद्यथा–

वेदविक्रयिणश्चैव वेदानां चैव दूषकाः।
वेदानां लेखकाश्चैव ते वै निरयगामिनः।।

इति महाभारते अनुशासनपर्वणि श्रूयते। वेदानां लेखकाः वेददूषकैः समं निन्द्यन्ते स्म। पुनश्च पाणिनीये धातुपाठे 'लिख–अक्षरविन्यासे' इति धातुः पठितः दृश्यते। एतेन पाणिनेः प्रागेव भारतीयानां लिपिज्ञानमासीदिति प्रमाणितं भवति। लेखकः लेखनी लेखा इत्यादि शब्दाः वाङ्मये श्रूयन्ते। एतेनापि लिखनं प्राचीनमिति ज्ञायते। प्रसिद्धमन्त्रलिखनात् , यस्य यल्लिखनं पूर्वम् इति पुराणवचनानि, प्रमाणं लिखितं भुक्तिः, पराशर–व्यास–शङ्खलिखिता इति याज्ञवल्क्यादिस्मृतिश्च श्रूयन्ते। एतेन प्राचीने भारते लिपिज्ञानमासीदिति वक्तुं शक्यते।

सम्प्रति पाण्डुलिपिशब्दार्थः विचार्यते। पाण्डुलिपिः नाम हस्तेन लिखितायाः रचनायाः प्रारम्भिकं प्रारूपं भवति। अद्य पाण्डुलिपिः इति शब्दः हस्तलेखस्य पर्यायत्वेन प्रयुज्यते। इतिहासेन ज्ञायते आदौ भूमौ लेखनं, ततः भित्तौ लिखनं, पश्चात् काष्ठेषु फलकेषु तालपत्रेषु इति क्रमशः लेखनस्याधारः परिवर्तनं प्राप्नोत् ।

पाण्डुलिपिरिति समस्ते पदे पाण्डुः लिपिः इति अवान्तरपदद्वयं वर्तते। आद्यस्य पदस्य श्वेतः पीतो वा इत्यर्थः। लिपिशब्दस्य वर्णप्रतीकम् अक्षरप्रतीकं वा इत्यर्थः। राष्ट्रियपाण्डुलिपिमिशन् इति संस्थायाः जालपुटे पाण्डुलिपिरित्यस्य सामान्यं विवरणमेव अवलोक्यते। कोशेष्वपि तादृशी एव स्थितिः। वस्तुतः पाण्डुलिपिः इति नाम्ना शारदा, देवनागरी, नन्दिनागरी इत्यादिवत् कश्चित् लिपिविशेषः इति भ्रमः जायते। वस्तुतः पाण्डुलिपिः लिखनरूपम् अभिलेखं निर्दिशति।

पाण्डुः इति शब्दः प्रागुक्तरीत्या श्वेतवर्णं, पीतवर्णं, श्वेतपीतमिश्रितवर्णं वा अर्थं निर्दिशति। एषः शब्दः 'पण-व्यवहारे' इति धातोः निष्पन्नः। एतस्य धातोः स्तुतिरपि अर्थः। अर्थात् स्तुतियोग्यं पवित्रं कर्म पणधातोरर्थः। पाण्डुलिपिरिति शब्दात् प्राक् पाण्डुलेखः इति शब्दः प्रयोगे आसीत् । किञ्च लिख इत्यस्य प्राचीनं रूपं रिष अथवा ऋष् इत्यपि विमर्शकैः विचार्यते। यद्यपि पाण्डुलेखः इत्यपि नातिप्राचीनः तथापि पाण्डुलिपिशब्दापेक्षया प्राचीनः भवितुमर्हति।

भूमौ फलकादौ वा श्वेतवर्णेन पीतवर्णेन वा यल्लिख्यते उद्गीर्यते वा स एव पाण्डुलेखः। वीरमित्रोदये दृश्यते- 'अयं च पक्षः प्राक्पाण्डुलेख्यं भूमिफलकादौ कारयित्वा शोधितः पश्चात् पत्रे लेखनीयः' इति। एतेन भूमौ फलकादिषु च यल्लिख्यते तस्य पाण्डुलेख इति नाम इति ज्ञायते। बृहस्पतिस्मृतौ श्रूयते-

**अधिकान् शातयेदर्थान् न्यूनांश्च परिपूरयेत् ।**
**भूमौ निवेशयेत्तावत् यावदर्थो विनिश्चितः।।**

अत्र शातयेदित्यस्य उद्वपेदित्यर्थः। तथा च पाण्डुलेख्यस्याधारः भूमिः अथवा तदन्यत्किञ्चिदिति लक्ष्यते। किञ्च स्मृतिः-

**पूर्वपक्षं स्वभावोक्तं प्राड्विवाकोऽभिलेखयेत् ।**
**पाण्डुलेखेन फलके ततः पत्रे विशोधितम् ।। इति।।**

अनेन पत्रे लेखनात्पूर्वं पाण्डुलेखः करणीयः क्रियते इति वा उक्तं भवति। व्यासस्मृतौ 'पाण्डुलेखेन फलके भूमौ' इति दृश्यते।

शोधयेत्पूर्ववादं तु यावन्नोत्तरदर्शनम् ।
अवष्टब्धस्योत्तरेण निवृत्तं शोधनं भवेत् ।।

इति नारदस्मृतिः। एतैः स्मृतिवचनैः पाण्डुलेखस्य प्रथा व्यवहारक्षेत्रेऽपि आसीदिति प्रमाणितं भवति।

तथा च पाण्डुलिपिः अथवा पाण्डुलेखः श्वेतवर्णेन पीतवर्णेन वा लेखनप्रक्रियां निर्दिशति। एवं प्राक् आरब्धस्य पाण्डुलेखशैली एव पश्चात् हस्तलेखत्वेन परिणता। अतएव सम्प्रति पाण्डुलिपिः इत्यस्य पाण्डुलेखः इत्यस्य वा हस्तलेखः इति अर्थः क्रियते। एवञ्च पाण्डुलिपिः न काचित् लिपिः परन्तु कश्चन हस्तलेखप्रकारः तत्र शिलालेखः काष्ठलेखः तालपत्रलेखः भूर्जत्वग्लेखः पत्रलेखः इति सर्वमन्तर्भवति।



# शोधप्रविधिः, न्यायशास्त्रे अनुसन्धानपद्धतिश्च

– एन्. के. जगन्नाथन्
अध्यापकः, न्यायविभागः,

अन्वेषणशब्दः अनु उपसर्गात् इष् धातोः ल्युट् प्रत्ययेन निष्पन्नः, अस्य च अन्वेषणशब्दस्य बहुप्रकारेण प्रयोगः 'प्रश्नोपनिषदि', छान्दोग्योपनिषदि च दृश्यते। अन्वेषणशब्देन अनुपलब्धस्य उपलब्धिः, अनुसन्धानपदेन उपलब्धस्य परीक्षणं, शोध इति पदेन च यथार्थविवेचनं, निर्णयो वा इत्यर्थः लभ्यते। एवञ्च ज्ञातविषयादज्ञाततत्वानामाविष्करणं अनुसन्धानमिति यावत्।

**शोधप्रकृतयः**

१. शोधस्तावत् मूलतथ्यतः नूतनं तथ्यमुपस्थापयति। पूर्वं ज्ञातस्य परिचयमात्रं अत्र न क्रियते, किन्तु मूलतः प्राप्तस्य तथ्यस्य तदुत्तरं संप्राप्तेन तथ्येन सह परिशील्य निर्णयः उपस्थाप्यते।

२. शोधः तर्कसङ्गतः अथवा प्रमाणसङ्गतः, वस्तुनिष्ठश्च भवति। शोधकर्ता स्वानुभवेन स्वकीयं शोधकार्यं तर्कबुद्ध्या परिशीलयति।

३. शोधः तत्वोपस्थापने दृढतां संपादयति। शोधार्थी दार्ढ्यपूर्वकं अत्यन्तं दायित्वपूर्वकं च शोधकार्यं उपस्थापयति। तदीयः दृढ आत्मप्रत्ययः तं तत्वान्वेषणे प्रेरयति।

**शोधपरिसरः (Scope of Research)**

शोधक्षेत्रं सर्वथा आवश्यकतानुसारेण सीमितं भवेत्। शोधकर्ता सुविस्तृतं क्षेत्रं स्वीकृत्य शोधमारभते चेत् शोधसंदर्भस्य मौलिकता न तिष्ठति। अतः समुचितं क्षुद्रतरं च क्षेत्रमवलम्ब्य शोधकार्यं संपादनीयम्, येन शोधकर्तुः चिन्तनं शोधसंदर्भस्य मौलिकता संरक्षेत्।

– शोधपरिसरः विषयानुगुणः निर्धारितः सीमितश्च भवेत्

– शोधस्य समालोचनापरिसरः स्पष्टः स्यात्।

– शोधपरिसरः प्रसङ्गानुकूलश्च भवेत्।

संस्कृतशोधकार्यस्य परिसरः स्तरद्वये वर्तते। प्रथमस्तावत्
– अप्रकाशितानां प्रकाशितानां वा पाण्डुलिपीनां संपादनम्। द्वितीयस्तु
– प्रकाशितानां पाण्डुलिपीनां सांस्कृतिकमध्ययनं वा आधारीकृत्य भवति।

**शोधप्रकाराः (Types of Research)**

**( १ ) मौलिकशोधः (Fundamental Research)**

तत्र प्राचीनशास्त्रीयसिद्धान्तमाधारीकृत्य गवेषणद्वारा यत् प्रामाणिकं तथ्यं लभ्यते, तत्तु सर्वथा मौलिकं भवति। वैज्ञानिकपद्धत्या कृतोऽयं शोधः कैश्चित् शुद्धशोधरूपेण अभिधीयते। विज्ञानक्षेत्रे एव अस्य उपयोगः।

**( २ ) व्यावहारिकशोधः (Applied Research)**

व्यावहारिकः अथवा प्रयोगात्मकः शोधो वा प्रकृतक्षेत्रं निर्वहति। इदानीन्तनयुगे वैज्ञानिकप्रगतये अस्य व्यावहारिकशोधस्य महद्योगदानं विद्यते। शिक्षाक्षेत्रे मनोविज्ञानेऽपि अस्य शोधस्य प्रयोगः भवितुमर्हति। एवं विविधभाषासु वर्णानामुच्चारणशैल्यां नूतनशब्दसंग्रहणविधौ च भाषाविदः अस्याः उपयोगं कुर्वन्ति।

**( ३ ) क्रियात्मकशोधः (Action Research)**

तृतीयः क्रियात्मकः शोधः, व्यावहारिक इव भवति, परं परस्परभेदस्तु इत्त्थं–तात्कालिकीं समस्यां समाधातुं तत्कालमेव समुपलब्धेषु तथ्येषु यःशोधः विधीयते, सः क्रियात्मकशोध इत्युच्यते।

**प्रकारान्तरेण शोधवैविध्यम्**

(१)तुलनात्मकः शोधः– संस्कृतक्षेत्रे इदानीं तुलनात्मकमध्ययनमाधारीकृत्यैव अनेके शोधप्रबन्धाः प्रस्तुताः सन्ति। यथा मूलसंस्कृतनाटकादिभिः सह बहूनां प्रान्तीयभाषासाहित्यसंबलितानां काव्यनाटकादीनां तुलनात्मकम्अध्ययनं तत्र तत्र विश्वविद्यालयेषु विधीयते।

(२) समालोचनात्मकः शोधः– संस्कृतशास्त्रपरंपरायां समालोचनात्मकम् अध्ययनं बहोः कालात् प्रचलति। अध्ययनेऽस्मिन् तथ्यानां पुनः पुनः निरीक्षणेन सह सावधानतया विश्लेषणं क्रियत इति एतादृशम् अध्ययनं शोधे किमपि नूतनत्वम् उद्भावयति।

(३) संपादनात्मकः– लुब्तप्रायस्य संस्कृतशास्त्रवाङ्मयस्य पुनर्जीवनाय संपादनात्मकः शोधः संप्रति अत्यावश्यकः। संपादनात्मकः शोधः यद्यपि नवीनतां न सृजति, तथापि मौलिकतां सर्वथा परिरक्षिता भवेदेव। पूर्वलिखितस्य जीर्णस्य कीटदंष्टस्य

वा अंशस्य संशोधनेन शुद्धपाठप्रदर्शनपुरस्सरं मूलपाठनिर्णयात्मकः शोधः अत्र अन्तर्भवति।

**(४) समीक्षात्मकशोधः-** अयं च शोधप्रकारः प्राचीनकालादरभ्य शास्त्रसंरक्षणार्थं तत्र तत्र समानविषयमाधारीकृत्य विभिन्नशास्त्रेषु अथवा विभिन्नग्रन्थेषु विद्यमानविचारमाधारीकृत्य उपयुज्यमानो दृश्यते। अत्र शोध कर्तुः मतद्वयसमीक्षात्मकं स्वमतोपस्थापनपुरस्सरं च ग्रन्थस्य विमर्शोः दृश्यते इति विशेषः।

**(५) तथ्यानुसंधानात्मकः-** सामान्यतः वैज्ञानिकगवेषणायां तथ्यानुसंधानात्मकः शोधः परिदृश्यते। तदनु प्रत्यक्षरूपेण अनुसंधानगतसमस्यायाः समाधानान्वेषणार्थं आवश्यकोपकरणैः प्रयोगशालायां परीक्ष्यते।

**न्यायशास्त्रे अनुसन्धानक्षेत्राणि**

शोधप्रकारो अधस्तात् दर्शितः। अथ न्यायशास्त्रे शोधप्रविधिज्ञानस्य कुत्र उपयोगः, न्यायशास्त्रे इतोऽपि अनुसंधेयाः विषयाः के इति निरूप्यन्ते।

न्यायशास्त्रे पूर्वनिर्दिष्टेषु शोधप्रकारेषु तावत् संपादनात्मकं, तुलनात्मकं, एवं समीक्षात्मकम् अध्ययनं सर्वोत्तमस्थानं भजते। तत्र संपादनात्मकम् अध्ययनं तावत् न केवलं अत्र फलप्रदं, किन्तु संपूर्णसंस्कृतशास्त्रवाङ्मयस्य अपि भवत्येव। पूर्वपूर्वपण्डितैः हस्तलिखितग्रन्थानां यथा लोपो न भवेत् तथा अस्माभिः अवश्यं प्रयत्नः कार्यः। पारंपरिकशास्त्राणां अध्ययनार्थं तुलनात्मकं समीक्षात्मकं वा अध्ययनं अत्यन्तप्रयोजनकरं। अतः एतच्छास्त्रानुसारेण ईदृशाध्ययनस्य कथं प्रवृत्तिः इति चेदुच्यते।

शास्त्रे सर्वत्र पण्डितानां प्रमेयविशेषे मतभेदः दरीदृश्यते। अत्र समीक्षात्मकमध्ययनं तावत् शास्त्रान्तरेषूक्तविषयेण साकं भवितुमर्हति, यथा न्यायनये केवलव्यतिरेकिलिङ्गं अङ्गीकुर्वन्ति, वेदान्तनये च तन्नाङ्गीकुर्वन्ति व्याकरणशास्त्रे धात्वर्थमुख्यविशेष्यकशाब्दबोधः अङ्गीक्रियते, मीमांसकमते च भावनामुख्य-विशेष्यकबोधः, न्यायनये च प्रथमान्तमुख्यविशेष्यकबोधः इत्येवंरीत्या शास्त्रभेदेन मतभेदः दृश्यते।

अथ समानशास्त्रेऽपि ग्रन्थकर्तृभेदेनापि विषयविशेषे मतभेदः दृश्यते, क्वचिदत्र निरूप्यते। अनुमितिकरणभूतपरामर्शविषये न्यायमीमांसकमतयोर्भेदः दृश्यते। नैयायिकाः व्याप्तिस्मरणानन्तरं, पक्षधर्मता, ततः व्याप्तिविशिष्टपदाधर्मताज्ञानमिति विशिष्टमेकं परामर्शात्मकं ज्ञानं अतिरिक्ततया स्वीकुर्वन्ति। मीमांसकाः व्याप्तिस्मृति-पक्षधर्मतारूपज्ञानद्वयादेव अनुमितेः उत्पत्ति स्वीकारेण, मध्ये विशिष्टपरामर्शस्य

कारणत्वमेव अनावश्यकमिति तन्नाङ्गीकुर्वन्ति।

तत्वचिन्तामणौ ज्ञानद्वयामेव अनुमितिरिति वदतां मीमांसकानां मतमुपन्यस्यति– 'एवं धूमो वन्हिव्याप्यः, धूमवांश्चायमिति ज्ञानद्वयामेव अनुमितिरस्तु' इति ग्रन्थेन। सामान्यतः ज्ञानद्वयादनुमितिरित्युच्यते चेत्, 'धूमो वन्हिव्याप्यः', 'आलोकवांश्च पर्वतः' इति ज्ञानद्वयात् 'पर्वतो वन्हिमान्' इत्यनुमित्यापत्तिः स्यात्। तदर्थं यदवच्छेदेन व्याप्तिज्ञानं, तदवच्छेदेन हेतोः पक्षधर्मताज्ञानमेव अनुमितिहेतुरिति वाच्यम्। तदर्थमेव च तत्वचिन्तामणौ 'एवं धूमो वन्हिव्याप्यः' इत्यनेन व्याप्यतावच्छेदक-प्रकारेणव्याप्तिज्ञानादेव अनुमितिरिति अवादिषुः।

अत्र सामान्यतः यद्धर्मप्रकारेण व्याप्तिज्ञानं तद्धर्मप्रकारेण पक्षधर्मताज्ञानं कारणमिति कुतो नोक्तमिति चेत्– यद्यपि एवमुच्यते चेदपि 'वन्हिमान् धूमात्' इति प्रकृतस्थले दोषाभावेऽपि यत्र द्रव्यत्वसामानाधिकरण्येन व्याप्तिज्ञानं जायते, तदनन्तरं द्रव्यत्वे्न च जलादेः पक्षभूतह्रदवृत्तित्वज्ञानात् 'ह्दो वन्हिमान् जलात्' इत्यत्र 'ह्दो वन्हिमान्' इति अन्यथाव्याख्यात्मकाऽनुमित्यापत्तिः। प्राभाकराः अन्यथाव्यातिं नाङ्गीकुर्वन्ति, परन्तु यद्धर्मप्रकारेणेति दिशा कार्यकारणभावकथने 'ह्दो वह्निमान्' इति वस्तुतः वह्न्यभाववति ह्दे वह्निप्रकारकज्ञानात्मकान्यथाख्यातिस्वीकारापत्तिः स्यात् तन्मते। अतः यद्धर्मप्रकारेणेति त्यक्त्वा यद्धर्मावच्छेदेनेति अभिहितम् दीधितिकृता इति गादाधर्यां तस्य सार्थक्यं प्रतिपादितम् ।

'यद्धर्मावच्छेदेनेति' इति अस्य सार्थक्यं अन्यादृशदिशा जगदीशतर्कालङ्कारा: अभ्यधुः। तथा हि–यत्र धूमत्वसामानाधिकरण्येन व्यभिचारग्रहः एवं व्याप्तिग्रहश्च तत्र तदनन्तरं धूमत्वेन पक्षधर्मताज्ञाने अनुमितित्युत्पत्तिप्रसङ्गः। यतो हि व्याप्य-तावच्छेदकधूमत्वावच्छेदेन व्याप्तिग्रहो यत्र जायते तत्रैव अनुमित्युत्पादात्। इदानीं अवच्छेदकत्वघटितकार्यकारणभावकल्पने च यत्र धूमत्वसामानाधिकरण्येन व्यभिचारग्रहः, तत्र कथमपि धूमत्वावच्छेदेन व्याप्तिग्रहस्य उत्पत्त्यसंभवात् कारणाभावान् कार्यभूतानुमित्युत्पत्तिः। तत्रैव कार्यकारणभावे व्याप्त्यंशे यद्धर्मस्य अवच्छेदकतया प्रवेशः, तस्य पक्षधर्मतांशे अवच्छेदकतया प्रवेशो नापेक्षितः, अत एव च 'यद्धर्मावच्छेदेन व्याप्तिज्ञानं, तद्धर्मावच्छेदेन पक्षधर्मताज्ञानं इति दीधितिकारैः नोक्तम्, किन्तु तद्धर्मरूपेण पक्षधर्मता ज्ञानं कारणमित्येवोक्तम्।'

अत्र मतद्वयसमीक्षा एवं कर्तुं शक्यते– तत्त्वचिन्तामणिस्थस्य 'एवं धूमो वन्हिव्याप्यः' इति ग्रन्थस्य तात्पर्यं वर्णयद्भिः दीधितिकारैः 'यद्धर्मावच्छेदेन व्याप्तिज्ञानं, तेन रूपेण पक्षधर्मताज्ञानं' इति रीत्या कार्यकारणभावः प्रादर्शि। तत्र च अस्य सार्थक्यं जगदीशाचार्यै, भट्टाचार्यैश्च भिन्नभिन्नस्थले दोषवारणार्थं इति निरूपितम्। यथा हि भट्टाचार्यैः द्रव्यत्वसामानाधिकरण्येन वन्हिव्याप्तिज्ञानात्, तदनन्तरं द्रव्यत्वे च जलादेः ह्रदरूपपक्षवृत्तित्वज्ञानात् 'ह्रदः वन्हिमान्' इत्यन्यथाव्यात्यात्मकानुमित्यापत्तिवारणाय यद्धर्मरूपेण अथवा यद्धर्मप्रकारेणेति वा त्यक्त्वा यद्धर्माववच्छेदेनेति उक्तमिति प्रतिपादितवन्तः। परन्तु अस्यैव सार्थक्यं जगदीशतर्कालंकारैः अन्यथा अभिहितम् । यत्र धूमत्वसामानाधिकरण्येन व्यभिचारग्रहः, एवं व्यभिचारग्रहश्च तदनन्तरं च धूमत्वमात्रेण पक्षधर्मताज्ञानं, तत्रापि अनुमित्युत्पत्तिवारणाय यद्धर्मावच्छेदेनेति वक्तव्यम्। एवं एकस्यैव पदस्य विभिन्नस्थले सार्थक्यं वक्तुं शक्यते इति ग्रन्थद्वयात् अवगन्तुं शक्यते इति सारांशः। अपि च पुनः गादाधर्यां यद्धर्मप्रकारेणेत्यस्य स्थाने यद्धर्मावच्छेदेनेति कुतो निविष्टमित्येतावन्मात्रमेव विचारितं, परं जागदीश्यां तर्कालंकाराः अग्रे कारणतावच्छेदककोटौ अपि 'तद्धर्मावच्छेदेनेति' न निवेशनीयं, अत एव च दीधितौ 'तेन रूपेण पक्षधर्मता ज्ञानमिति' प्रतिपादितवन्तः। तद्धर्मावच्छेदेनेति तत्रोक्तौ धर्मत्वावच्छेदेन व्याप्तिग्रहदशायां नीलधूमत्वप्रकारकपक्षधर्मताज्ञानात् वस्तुतः अनुमितिः जायते एव, अतः तेन रूपेण इति एतावन्मात्रमेव निवेशनीयं, अन्यथा ताद्दशानुमितेः अनुत्पादप्रसङ्गात् इति विशेषः तर्कालङ्कारैः प्रत्यपादि एवं 'उपजीव्यत्वादिति' पाठे तु उपजीव्यत्वं 'स्वनियततादृशज्ञानसत्ताकत्वं इति विशेषतः' जागदीश्यां तत्परिष्कारश्च प्रादर्शि इति विशेषः अनुसन्धेयः।

अत एव एवंविधा समीक्षा ग्रन्थद्वयं उद्धृत्य तत्रतत्र अस्माभिः कार्येति समीक्षात्मकं, तुलनात्मकं च अध्ययनं अत्यन्तं अपेक्षितं न्यायशास्त्रे इति शम् ।



# स्वाध्याय-सामग्रीषु अभिनवा व्याख्यापरम्परा

## ( दूरशिक्षायां काव्य-शिक्षणस्य विशेष-सन्दर्भे )

डॉ. धर्मेन्द्र कुमार सिंहदेवः
सहायकाचार्यः

**प्रस्तावना**

दूरशिक्षा नाम देश–काल–पात्रतादि–दृढप्रतिबन्धरहितं मुक्तभावेन स्वानुकूलस्य स्वाभिलषितस्य विषयस्य अध्ययनम् । आहोस्विद् ज्ञानस्य अर्जनम् । मुक्तहस्तं सर्वेभ्यः शिक्षायाः वितरणं, ये च नानाविधविषयेषु विशिष्टम् अध्ययनं कौशलम् अधिगन्तुं वा अभिलषन्ति, तेषामपि कृते विशिष्टायाः शिक्षाव्यवस्थायाः सम्पादनमपि प्रयोजनं दूरशिक्षायाः। सम्प्रति समुदिते एकविंशे शतके शिक्षालोके प्रधानतया समुदीयमानासु व्यवस्थासु दूरशिक्षा अन्यतमां भजते। इयं हि दूरशिक्षा ज्ञानप्रसारणप्रणाल्यां क्रान्तिमानयदिति नास्ति संशितिलेशः। सन्दृष्टैः नानाप्रकारैः अभिनवप्रतिमानैः, सूचनासम्पर्कप्रविधिसाधनैः नवशिक्षणप्रयोगैश्च सम्पूर्णं परिदृश्यमेव नवायितम् ।

**पाठ्यक्रमाः**

संस्कृतविषयमधिकृत्य देशविदेशेषु विविधविश्वविद्यालयेषु संस्कृतसंस्थासु वा परिचय प्रमाणपत्र–डिप्लोमा–उपाधि–पाठ्यक्रमाः प्रचलन्ति पारम्परिकं नाम पूर्वमध्यमा (10th ), उत्तरमध्यमा/प्राक्शास्त्री/उपशास्त्री(12th), शास्त्री (Graduation), आचार्यः (Master Degree) इत्येवमुपाधियुक्तं शिक्षणम् । आधुनिकं नाम संस्कृते B.A., M.A....आदि।

संस्कृतशिक्षाक्षेत्रे धाराद्वयम् प्रसरति भारते। तत्र संस्कृते उच्चाध्ययनक्षेत्रे भारतशासनमानवसंसाधनविकासमन्त्रालयाधीना मानित–विश्वविद्यालया वर्तन्ते। अथ च राज्यशासनस्य प्रतिराज्यं प्रायः संस्कृतविश्वविद्यालयाः प्रचलन्ति। ते च विश्वविद्यालया मानितविश्वविद्यालया वा विविधान् पारम्परिककार्यक्रमान् अभिनवपाठ्यक्रमांश्च समारब्धुं प्रवर्तयितुं च दूरशिक्षापरिषदा (Distance Education Council) अधिकृताः आसन् । इन्दिरा गान्धी राष्ट्रीय मुक्त विश्वविद्यालय (IGNOU) इत्यस्य प्रशिक्षण–निर्देशानुसारेण

एते च विश्वविद्यालया दूरशिक्षामाध्यमेन विविधपाठ्यक्रमान् प्रारब्धुं समुचितदिशायां प्रयासरता वर्तन्ते।

**शिक्षणम् -**

आदौ प्रतिविषयं प्रतिपाठ्यक्रमं वा स्वाध्याय-सामग्रीणां (Self-Learning-Material) दूरस्थशिक्षाव्यवस्था-मानदण्डेन निर्माणं भवेत्। सा च पाठ्यसामग्री सरल-बोधगम्य-संस्कृतभाषायां भवेदेव। तत्रापि पाठकानां सुखबोधाय बाहुल्यार्थं च तेषां तेषां मातृभाषायाम् अपि सरलार्थः बोधार्थो वा भवेदिति मामकीनः पक्षः। अपि च, विश्वस्तरे प्रसाराय आङ्गलभाषया अपि अनुवादः स्यात्। एवम्प्रकारेण सज्जीकृतासु स्वाध्यायसामग्रीषु अनुदेशनमाध्यमेन समधिकं सूक्ष्मेक्षिकया संस्कृतम् इतोऽपि विकासमेत्स्यति।

**काव्यशिक्षणम्**

सम्प्रति काव्यशिक्षणस्य विधौ राष्ट्रियसंस्कृतसंस्थानेन मानितविश्वविद्यालयेन निर्मिता काव्यवतरणी नाम स्वाध्यायसामग्री विचार्यते। तत्र च संस्थानेन विविधपाठ्यक्रमेषु काव्य-स्वाध्याय-सामग्रीषु संक्षेपरामायणम्, विदुरनीतिशतकम्, भर्तृहरिनीतिशतकम्, श्रीमद्-भगवद्-गीता, किरातार्जुनीयम्, मेघदूतम्, नैषधीयचरितम् (प्रथमः सर्गः) आदीनां काव्यानां ग्रन्थानां स्वाध्याय-सामग्री विनिर्मिता।

तत्रायं क्रमः। श्लोकः, पदच्छेदः, पदपरिचयः, आकाङ्क्षा, अन्वयः, पदार्थः (संस्कृतम्, हिन्दी, आंगलम्), भावार्थः (संस्कृतम्, हिन्दी, आंग्लम्), निदर्शनम् (व्याकरणम्, छन्दः, कोशः...), अभ्यासश्चेति। तथाहि-संक्षेपरामायणे

**श्लोकः**

तपः स्वाध्यायनिरतं तपस्वी वाग्विदां वरम्।
नारदं परिप्रपच्छ वाल्मीकिर्मुनिपुङ्गवम्॥१॥

**पदच्छेदः**

तपः-स्वाध्याय-निरतम् तपस्वी वाग्-विदां वरम्।
नारदम् परि-प्रपच्छ वाल्मीकिः मुनि-पुङ्गवम्॥

**पदपरिचयः**

| | | |
|---|---|---|
| तपःस्वाध्यायनिरतम् | - | अ.पुं. द्विती. एक. समस्तम् |
| तपस्वी | - | तपस्विन् - न.पुं.प्र.एक. |
| वाग्विदाम् | - | वाग्विद् - द.पुं.ष.बहु. समस्तम् |
| वरम् | - | अ.पुं. द्विती.एक. |

| | | |
|---|---|---|
| नारदम् | – | अ.पुं. द्विती.एक. |
| परिप्रपच्छ | – | परि–प्रच्छ्–कर्तरि लिट् प्र.पु.एक. |
| वाल्मीकिः | – | इ.पुं.प्र.एक. |
| मुनिपुङ्गवम् | – | अ.पुं. द्विती.एक. समस्तम् |

**आकाङ्क्षा**

**परिप्रपच्छ**

| | |
|---|---|
| कः परिप्रपच्छ? | वाल्मीकिः परिप्रपच्छ। |
| कीदृशः वाल्मीकिः परिप्रपच्छ? | तपस्वी वाल्मीकिः परिप्रपच्छ। |
| वाल्मीकिः कं परिप्रपच्छ? | वाल्मीकिः नारदं परिप्रपच्छ। |
| कीदृशं नारदं परिप्रपच्छ? | तपः स्वाध्याय–निरतं नारदं परिप्रपच्छ। |
| पुनः कीदृशं नारदं परिप्रपच्छ? | वाग्विदां वरं नारदं परिप्रपच्छ। |
| पुनश्च कीदृशं नारदं परिप्रपच्छ? | मनिपुङ्गवं नारदं परिप्रपच्छ। |

**अन्वयः**

तपस्वी वाल्मीकिः तपः स्वाध्यायनिरतं वाग्विदां वरं मुनिपुङ्गवं नारदं परिप्रपच्छ।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| तपस्वी | तपश्चरणशीलः | तपस्वी | one who performs penance |
| वाल्मीकिः | वाल्मीकि–नामा मुनिः | महर्षि वाल्मीकि | sage named Valmiki |
| तपः स्वाध्यायनिरतम् | तपसि स्वाध्याये च प्रवृत्तम् | तप एवं स्वाध्याय में संलग्न | who is constantly engaged in penance and self-study |
| वाग्विदाम् | शास्त्राज्ञानाम् | शास्त्रज्ञों में | amongst wise men |
| वरम् | श्रेष्ठम् | श्रेष्ठ | greatest |
| मुनिपुङ्गवम् | मुनि–श्रेष्ठम् | मुनि–श्रेष्ठ | greatest among sages |
| नारदम् | नारद–नामानं देवर्षिम् | देवर्षि नारद से | to the divine sage Narada |
| परिप्रपच्छ | पृष्ठवान् | पूछा | Asked |

**भावार्थः**

संस्कृतम् - तपस्वी महर्षिः वाल्मीकः व्रतनियमादिषु वेदाध्ययन-अध्यापनादिषु च सततं तत्परं ज्ञानिनां वरिष्ठं मुनिषु श्रेष्ठं देवर्षि नारदं पृष्टवान् ।

हिन्दी- तपस्वी वाल्मीकि ने व्रतनियमादि एवं वेदाभ्यास में सदैव तत्पर रहने वाले, ज्ञानियों में श्रेष्ठ तथा मुनियों में अग्रगण्य देवर्षि नारद से पूछा।

आंग्लम् – The ascetic Valmiki put the following question direct to Narada, the chief of hermits, the foremost of those skilled in expression, who remains (ever) engaged in penance and self-study (the study of the Vedas and Vedanges)

निदर्शनम् व्याकरणम् , छन्दः, कोशः इति।।

अत्रायं विमर्शः। श्लोकः यथाग्रन्थं लिख्यते। **पदच्छेदेन** श्लोकस्य पठनम् उच्चारणं वा सुकरम् । **पदपरिचये** तु पदम् , तस्य च विभक्ति-लिङ्ग-वचनानुरोधेन विश्लेषणं कृतं विद्यते। तेन च पदार्थज्ञानाय मार्गः सुलभः। **आकाङ्क्षा** तु श्लोकावगमस्य मूलम् । अत्र खण्डान्वयः परिलक्ष्यते। अन्यत्र तु प्रकाशिते पुस्तके दण्डान्वयः एव लभ्यते। प्रायः ५० पञ्चादशदधिकेभ्यो वर्षेभ्यः प्रकाशितेषु पुस्तकेषु श्लोकानां दण्डान्वयो हि प्रकाश्यते। खण्डान्वयस्तु अकाङ्क्षा-मुखेन गुरुवः कक्षासु श्लोकस्य पाठने बोधने वा व्यवहरन्ति। परमत्रायं विधिः समादृतः। तेन च पदानां विशेषणानां पदान्तराणां च परस्परं सम्बन्धः अवगम्यते। **अथ अन्वयः**, अर्थाद् दण्डान्वयः। तेन च पद्यरूपस्य श्लोकस्य वाक्यात्मकं गद्यरूपम् । अतः शाब्दबोधः। **पदार्थः** संस्कृत-हिन्दी-आंग्ल-भाषाभिः प्रदत्तः। येन श्लोकस्य भावग्रहणे सौकर्यम् । अथो **भावार्थः** संस्कृत-हिन्दी-आंग्ल-भाषासु लिखितः। अनेन सम्पूर्णस्य श्लोकस्य त्रिषु भाषासु अर्थः स्पष्टीकृतः।

ततो **निदर्शनम्** । तत्र च व्याकरणनामके घटके श्लोकस्थेषु पदेषु विद्यमानाः सन्धयः समासाः कृदन्ताः तद्धिताः....आदयः विषयाः विवेचिताः। श्लोकस्थच्छन्दसः परिचयः प्रस्तुतः। पर्याय-शब्द-ज्ञानाय कोशवाक्यमपि समुद्धृतम् ।

अथो **अभ्यासः**। अभ्यासमुखेन श्लोकस्य लेखनम् , पदस्य पर्यायः, विशेषणस्य क्रियापदस्य क्रियाविशेषणस्य अव्ययानां च प्रयोगः कथं भवति कथं वा करणीय इति विशेषतया पाठकानां जायते।

एवमन्यासु विदुरनीति-भर्तृहरिशतकादिषु काव्यशिक्षा-स्वाध्यायसामग्रीषु विधिरयं समुपलभ्यते।

अत्रायं **प्रश्नः**। संस्कृताध्ययने उच्चारणस्य भूमिका बलीयसी। तत्र वर्णस्य

स्थान-प्रयत्नैः सह उच्चारणम् अभ्यासं विना कथमपि न सम्भवति। तस्मात् कथं दूरे स्थिताः पाठकाः संस्कृतस्य पठने उच्चारणे वा समर्थाः भवेयुः? इति।

अत्रोच्यते। तदपि संगणकीय-Software- माध्यमेन सम्भवेत् । तथाहि- संस्कृतवर्णोच्चारणविशेषज्ञानां वैदिकानां वा स्वरस्य व्यञ्जनस्य अनुस्वारस्य विसर्गस्य संसयुक्ताक्षरस्य श्लोकस्य पाठस्य वा साधूच्चारणं/(voice recording) संगणके स्यात् । सर्वं Programming भवेत् । पाठकाः संगणकस्य पुरत एवं वर्णं वदेत् । साधु स्याच्चेत् संगणकं स्वयम् अग्रे पुनः अपरस्य कृते स्थानं दद्यात् । यथा आवेदनादि पूरणे अनिवार्यस्य रिक्तस्थानस्य पूरणानन्तरं संगणकम् अग्रिमं रिक्तं पदं दर्शयति पूरयितुम् । तथैवात्र साधूच्चारणात् परं अग्रिमस्य व्यवस्था। तदाधारेण पाठका जिज्ञासवो दूरे स्थिता अपि सम्यक्तया संस्कृतं पठितुं प्रभवेयुः। तथा च संस्कृतस्य उच्चारणे या भीतिः प्रचलति सापि निर्गच्छेत् । एवं सज्जीकृता स्वध्याय-पाठ्यसामग्री, सान्द्रमुद्रिका (CD/DVD) , विशेष Software आदयः दूरस्थपाठकानां कृते सुलभाः सरलाश्च स्युः।

**तथा चात्रायं विशेषः**। शास्त्रि-आचार्यादिषु उपाधि-पाठ्यक्रमेषु निर्धारिताः स्वाध्याय-सामग्र्य एकाम् अभिनवां व्याख्यासरणिम् अनुसरन्ति। तत्र **नामूलं लिख्यते किञ्चन् नानपेक्षितमुच्यते** इति व्याख्यासरणिरनुसृता। तथापि मूलग्रन्थस्य यावन्त्यः टीकाः व्याख्याः भाषाव्याख्याश्चादयो वर्तन्ते। ताः सर्वा अत्र विमृश्य पाठकानां बोधाय सुगमेन संस्कृतेन स्वाध्यायसामग्री प्रस्तुता। अत्र च पठन-पाठनम् , गूढार्थ-विमर्शनम् , फक्किकाबोधनम् , विषयम् , संशयम् , पूर्वपक्षम् , उत्तरपक्षम् , निर्णयम् च सर्वविधम् बोधकौशलम् एकीकृत्य सारगर्भा क्रमेण सकलबोधगम्या व्याख्या समुपलभ्यते। तत्रापि मूलविषयस्य स्पष्टीकरणम् , मध्ये मध्ये च बोधप्रश्नेन पाठकानाम् अवगमे मूल्याङ्कनं विधीयते। किं बहुना, न केवलं स्वाध्यायच्छात्राः अपितु शिक्षकाः पाठका जिज्ञासवः सर्वे स्वाध्यायसामग्रीं स्वीकुर्वन्ति। तत्र सामग्रीणां लक्ष्याधिकं प्रकाशनमेव प्रमाणम् ।

**निष्कर्षः**

अत्रायं निष्कर्षः। दूरस्थशिक्षणेन संस्कृतनिष्ठज्ञानधारायाः उत्तमावबोधस्य सर्जनं भवति। संस्कृत-विद्यान्तर्गतानाम् अभिनवविषयाणां संवर्धनं भवति। आधुनिकसमाजस्य उत्कर्षाय सम्भावनानां प्रकाशनदृष्ट्या संस्कृतभाषायाः तत्साहित्यस्य च प्रासङ्गिकतायाः आविष्करणं सम्भवति। तत्रापि संस्कृते पारम्परिक-आधुनिकयोः वैदुष्यस्य समन्वयनदृशा संस्कृतशिक्षायाः वैश्विकपरिप्रेक्ष्यस्य उपस्थापनम् इति महती सम्भावना। इति दिक्....



# संस्कृतविद्यानुसन्धानस्य आधारभूमिः

योगेश चन्द्र थुवालः
शोधच्छात्रः

यद्यप्यनुसन्धानम् अन्वेषणम्, शोधः, गवेषणादयः शब्दा 'रिसर्च इत्याङ्गलशब्दस्यानुवादपरिणामाः, व्याकरणन्यायमीमांसावेदान्तादिसूत्रग्रन्थेषु प्रकृष्टतमं तथाकथितमनुसन्धानम्संस्कृत साहित्येऽनुसन्धानशब्दस्यार्थः-विचारः, संयोगः, गवेषणा अनुसरणमित्यादयः। संहितासु महाभाष्ये चानुसन्धानशब्दो नैव प्रयुक्तः। मनुस्मृतावनुसन्धानं नाम विचारः। एष विचारः प्रणिधानकल्पो यथोपनिषत्सु। साम्प्रतिको रिसर्च शब्दस्तु तत्त्वार्थ विचार परो रूदः। बालमनोरमाकारो सूत्रटीकायां सिद्धान्तकौमुधां लिखति-बहुगवेषितोऽपि क्वचित् कोशे नोपलब्ध इति लिखितम्। कोशः=कोऽपि कोशः, मृग्यः=गवेषणीयः यस्मिन् स्यादयं शब्द इति। "अनुसंधान" इति शब्द प्रयोग उपनिषत्सु तत्त्वानुसंधानपरः। स च् समाम्नायाधारक एव।

सन्धानं नाम- स्थापना परस्परानुकूलता सम्यक् धारणम्अभिमुख्येन स्थापनम्-संप्रयोगः संश्लेषः-संनिधानम्, संयोजना साहित्यम् सन्धिरित्यादयः।

अनु-पश्चात्, आभिमुख्येन स्थापना वा संयोजना वेत्यनुसन्धानम् ।

संस्कृतविद्यानुसन्धानस्य आधारभूमिः प्रामुर्ख्येन समाजशास्त्रीयं साहित्यिकं च। इह दिशि भाषा-दर्शन-ज्योतिष-काव्येतिहास पुराणादिविषयानधिकृत्य बहुषु अनुसन्धीयतेऽनुसन्धायकैः। शास्त्रीयेष्वनुसन्धानेषु नवीनतथ्यानाम् नियमानाम् संबन्धानाम्, परिमाणानां परम्पराणां नवीनविचाराणाम् च गवेषणा नामानुसन्धान कोटिः। अनुसन्धानस्य काश्चन विशिष्टाः प्रकृतयः ज्ञायन्ते। इमाः प्रकृतयः अनुसन्धानकर्तुः कार्यदक्षतां सृजनशीलताम् अन्तर्दृष्टिं तथा कल्पनाशक्तिं च प्रभावयन्ति। यथोपनिषत्सु लिखितम् -

**समाधौ क्रियमाणे तु विघ्नान्यायान्ति वै बलात् ।**
**अनुसन्धानराहित्यमालस्यं भोगलालसम् ।।**

अनुसन्धानं मूलतथ्यतः नूतनं ज्ञानमुपस्थापयति। केवलं ज्ञातपूर्वस्य परिचय मात्रमत्र न क्रियते, मूलतः प्राप्तस्य तथ्यस्य तदुत्तरं सम्प्राप्तेन तथ्येन सह परिशील्य निर्णय उपस्थाप्यते।

अनुसन्धानं भवति निपुणं सुव्यवस्थितं यथार्थपरीक्षणं च। प्राचीन-शास्त्रीयसिद्धान्तमाधारीकृत्य अनुसन्धानद्वारा यत् प्रामाणिकं तथ्यं लभ्यते। अनुसन्धानसामग्रीसंग्रहः प्रथमा पीठिका, तस्य च क्रमबद्धव्यवस्था द्वितीया पीठिका। वस्तुतोऽनुसन्धानकार्यार्थं पीठिकाद्वयमपरिहार्यम् ।

संस्कृतभाषायाअद्यत्वे संस्कृतभाषानिबद्धं कार्यं नगण्यम्। इह दिशि विशिष्टग्रन्थेषु भाषाशास्त्रीयमध्ययनं प्रस्तोतुं शक्यते। यथा ऋग्वेदस्य यजुर्वेदस्य, सामवेदस्य, अथर्ववेदस्य, ब्राह्मणानाम् , आरण्यकानाम्, उपनिषदाम्, सूत्राणाम्, तन्त्राणाम्, मनुस्मृतेः, भासनाटकचक्रस्य, नैषधस्य, कालिदासकाव्यानाम् भवभूतिनाटकानाम्, कालिदासनाटकानाम्, बाणभट्टगद्यस्य वाल्मीकिरामायणस्य, महाभारतेत्यादिग्रन्थानां भाषाशास्त्रीयमध्ययनं उपयोगी स्यात् पुराणादिभिः सह।

अनुसन्धानकार्यं सुविपुलं गुरूतरं च। एतच्च ग्रन्थलेखनाद् निबन्धलेखनाद् वा भिन्नम्। ग्रन्थ निर्माणम् आहोस्विद् निबन्ध लेखनम् अनुसन्धानप्रबन्धलेखनाद् भिन्नम्। ग्रन्थादि निर्माणं तावद् प्रणेत्रभिरुचि तद्भिमतं च व्यनक्ति। अनुसन्धानप्रबन्धलेखनं तु विषयस्वरूपं स्पष्टयति। ग्रन्थादि निर्माणं खलु निर्मातृज्ञानसीमानं प्रकाशयति, अनुसन्धान प्रबन्धलेखनं तु विषयप्रामाणिकत्वं दर्शयति।

अनुसंधानं नाम नाग्रहाधारेण, न चाहङ्काराधारेण न वा भावुकतावेशे भवितु मर्हति। कस्यापि क्षेत्रस्यानुसंधानं पूर्णतो विशुद्धभक्त्या विधीयते। इह शुद्धबुद्धिर्भूयिष्ठतया वाञ्छनीया।

साहित्यम् – द्वैविध्यं खलु साहित्यस्य १. वैदिकम् २. लौकिकं चेति वैदिकग्रन्थेषु लौकिकसंस्कृतग्रन्थेषु च साहित्यिकम् अध्ययनं निकामम् उपयोगी स्यात्। इह हि शैलीदृशा अलङ्कारादिविविधदृग्भिरनुसंधानकार्यं भवितुमर्हति। हस्तलेखगवेषणासूचनाभिरप्रकाशितरचनानां कवीनां महाकवीनां वा परिज्ञानं लभ्यते। एतादृशाः कवयोऽनुसंधानविषयीकर्तव्याः। वाल्मीकिभासकालिदासादीनां संबन्धे सर्वाभिर्दृष्टिभिर्विचारेण भाव्यम्। प्रतिकविविशिष्टाध्ययनं करणीयतामर्हति। कवीनां विशेषविषयेषु प्रवृत्तिषु वैतावच्चिरं न्यूनतमं कार्यं जातमिति तत्राप्यवकाशस्तदनुष्ठानार्थम्। अद्यापि विचारकोटेर्याथार्थ्येन तत्र परीक्षणं न जातम्, न च स्वोपज्ञताप्रयास एव। अनुपलब्धानां नवीनतथ्यानां वा गवेषणा नूतनप्रकारेण च तत्प्रतिपादनम्।

उपलब्धानां तथ्यानां सिद्धान्तानां वा पुनराख्यानम् , नवीन प्रकारेण च तत्प्रतिपादनम् कस्याश्चिदपि रचनायाः सुदृढमूलप्रमाणपुरस्सरम् आलोचनात्मकं परीक्षणम्, नवीनपद्धत्या च तत्प्रतिपादनम्। कस्याश्चिदपि रचनायाः सुदृढमूलनिर्णयपुरस्सरं प्रमाणपुष्टं पाठानुसन्धानं विस्तृतभूमिकया च नवीन पद्धत्या प्रतिपादनपूर्वकं तत्संपादनम्। कस्याश्चिदपि रचनायाः कस्याचिदन्यरचनया रचयित्रावा सह तुलना।

**प्रतिपादनशैली-**

व्याकरणदृशा संस्कृतभाषा विश्वभाषासु पूर्णतमा व्यवस्थिता चेति सा वैज्ञानिकी। तत्र स्वरोच्चारणस्य शब्दव्युत्पत्तेश्च वैज्ञानिकी विवेचना। एवं खलु भाषायां व्याकरणे च प्राचीनकाले महत्त्वाधायकमनुसन्धानं कृतं भारतीयैराचार्यैः।

ततोऽनेकैः पाश्चात्त्यैर्विद्वद्भिः संस्कृतभाषां प्रति समाकृष्टाः पाश्चात्त्या संस्कृतभाषाजगति पुनरनुसन्धानसूत्रपातमकार्षुः। ततोऽनेकैः प्राश्चात्यैर्विद्वद्भिः संस्कृतभाषासाहित्याध्यापनकर्मणि जीवनं समर्पितम्। अनुसन्धानदिशि च महत्त्वाधायका विचारा उपस्थापिताः।

संस्कृतविद्वांसः स्वप्रतिभाद्याश्रिता अनुसंधानकार्यदृढपरम्परा प्रवर्तने वद्धपरिकरा भवेयुः। संस्कृतजगति प्रतिभाशालिनां विदुषां नास्त्यभावः। तेषां सहयोगेन गम्भीरतापूर्वकम् अनुसन्धानसमस्यां विचार्य संस्कृतभाषानुसन्धानकार्यं आदर्शस्वरूपं च कर्तुं शक्यते।



# शोधविषयनिर्वाचने ध्यातव्यविन्दवः

रुचि बरनवाल
शोधच्छात्रा

अनुसंधानकार्यस्य सर्वप्रथमः पदक्रमो भवति विषयनिर्वाचनम्। कस्याः अपि गवेषणायाः कृते विषयनिर्वाचनं महत्वपूर्णं भवति। सुचिन्तितविषयमाश्रित्य शोधः सरसः तात्पर्यपूर्णश्च भवति। समुचितविषयं विना शोधकर्मणि नूतनता न प्रतीयते। प्रायोऽत्रैतादृशी स्थितिरुद्भवति यादृशी किल कस्यापि यात्रिणो निर्दिष्टस्थानज्ञानं विना प्रारब्धचलनस्य। यो हि चानन्तरं दिग्भ्रान्तोभूत्वा किञ्चन दूरं गत्वाऽनुभवति यत् स पूर्वस्य स्थाने पश्चिमं प्रति प्रस्थितोऽस्ति। इत्थं समयश्रमयोरुभयोरपव्ययो भवति। वस्तुतोऽनुसन्धातुर्विद्यार्थिनो मानसे स्वयमेव स्पष्टतोऽस्पष्टतो वा विषयस्य स्वरूपं वर्तमानं भवति। श्रमसमययोः सदुपयोगाय पूर्वमेव समुचितः विषयः स्थिरीकर्त्तव्यः।

इदानीमनुसन्धानक्षेत्रे विषयनिर्वाचनाय विभिन्नाः प्रणाल्योव्यवह्रियन्त इत्यस्य सर्वप्रथमं स्पष्टीकरणमत्र वयमावश्यकं मन्यामहे। साम्प्रतं वयं विषयनिर्वाचनसम्बद्धास्तिस्रः प्रणालीरूपक्रममाणा आश्रयामः। योजनाबद्धपद्धतिः, स्वच्छन्दा वैयक्तिकी पद्धतिः, विषयसूचीनिर्माणपद्धतिश्चेति। तत्र प्रथमा योजनाबद्धा प्रणाली वर्तते, येयं कस्यापि विभागस्य कस्याश्चित् संस्थाया एकया नियतयाऽनुसंधानयोजनया सम्बद्धा भवति। तत्कृते कयाऽपि योजनया सम्बद्धानां विषयाणामेका सूची निर्मीयते, तेषु च विषयेषु शोधचिकीर्षुभिरछात्रैरनुसंधानकार्याणि कार्यन्ते। अथ चेत्थं योजनासम्बद्धा नियता निष्कर्षा परिणामश्च प्रस्तूयन्ते। इदानीं भारते विश्वविद्यालयानुदानायोगाधीने अनेके गवेषकाः, गवेषणासंस्थाः वा योजनाबद्धपद्धतिमबलम्ब्य सुनिर्दिष्टं विषयं निर्णीय च शोधप्रबन्धं समुपस्थापयितुं प्रयतन्ते। संस्कृतभाषाक्षेत्रेऽपि विदुषां समवाये योजनाबद्धपद्धत्या विषयनिर्वाचनं विधाय शोधकार्यार्थं विद्यार्थिनः प्रेरिताः भवेयुः।

अत्र विद्यार्थी स्वकीयया रुच्या क्षमतायाश्चानुसारेण कांश्चिद् विषयान् संचित्यानयति निर्देशकश्च तेष्वन्यतमं यञ्चोपयुक्ततममवगच्छति तदर्थं निश्चित्य तस्मै ददाति। एतन्निर्णयकाले निर्देशकोऽध्यापयति–यदि अनुसंधित्सुना प्रस्तावितेषु विषयेषु कोऽपि विषयोऽतितरां विततोऽतिसंक्षिप्तो वास्ति तर्हि स यथायथं संशोध्य तमनुरूपं कुर्यात् तस्य च स्तरमनुरूपतां नयेदिति। बहुधा तस्य प्रस्तावितेषु विषयेष्वन्य-तमोप्युपयुक्तो न प्रतिभाति तदा निर्देशकस्तादृशमेवकमपि विषयं निर्माय प्रयच्छति। स एव च विषयस्तत्कृते तेन निश्चीयते।

अद्यत्वे व्यस्तबहुले काले समुचितविषयनिर्धारणाय शोधच्छात्राः गवेषकाः वा आग्रहं प्रकटयन्ति। किञ्च कथमपि उपाधिप्राप्तये केचन प्रयत्नवन्तः परिदृश्यते। तेन शिक्षायाः लक्ष्यं सर्वथा बाधितं भवति। शोधस्य मानमपि अनुदिनं क्षीयते। तस्मात् युगानुकूलं समयानुकूलं च विषयं निर्णेतुं विश्वविद्यालयस्तरे विषयविशेषज्ञाः सम्भावितशोधविषयाणां सूचीं प्रस्तुवन्ति। येषु विषयेषु गवेषणाकार्यं जातम्, येषु विषयेषु च अद्यावधि न जातमिति विषयसूची निर्धार्यते। तामेव विषयसूचीं विलोक्य समुत्साही शोधविद्यार्थी निजदक्षतानुगुणं विषयं स्वीकृत्य शोधकार्यं प्रारभेत्। संस्कृतसाहित्यविषये संप्रति विषयसूचीनिर्धारणे नितान्तमावश्यकं प्रतिभाति। यतः भारतवर्षे संप्रति संस्कृतभाषायाः महान् प्रचारः सञ्जातः। तेन अनेके संस्कृतविश्वविद्यालयाः उन्मोचिताः। तत्र बहुषु विषयेषु शोधकार्यं द्रुतगत्या प्रवर्त्तते अनेकाः संस्कृतशोधसंस्थाः अपि सञ्चाल्यन्ते। बहुषु विश्वविद्यालयेषु संस्कृतविभागे शोधच्छात्राः कार्यरताः सन्ति। कदाचित् एकमपि विषयमवलम्ब्य चर्वितचर्वणरीत्या शोधसन्दर्भाः भवितुमर्हन्ति। तस्मातविषयसूचीनिर्माणपद्धतिद्वारा सुविस्तृतस्य संस्कृतभाषासाहित्यक्षेत्रस्य कमपि निर्दिष्टमंशविशेषमाश्रित्य शोधकर्त्ता प्रामाणिकं सन्दर्भं प्रस्तौतुं पारयति।

विषयनिर्वाचनप्रसङ्गे कस्मैचिदनुसंधित्सवे विषयप्रदानात् पूर्वं येषु तत्त्वेष्वस्माकमवधानध्यानन्यास आवश्यको भवति तानि सन्ति विषयस्योपयुक्तता, रुचिमनोवृत्तिकार्यसम्पादनाभिव्यक्ती, अध्ययनस्य पृष्ठभूमिक्षमता, सामग्री सौलभ्यम् योग्यनिर्देशनसौगम्यं, विषयस्य उपयोगितामहत्त्वञ्च। वस्तुतोऽनुसन्धानकार्यमेकं पवित्रं निरपेक्ष कार्यमस्ति। शोधविषयनिर्वाचनसमये शोधकर्त्तुः मार्गदर्शकस्य च परस्परं शैक्षिकः समन्वयः भवेत्। उभयोः रुच्यनुगुणः विषयः गृह्यते चेत् कार्यमपि सरलं भवेदेव। एतद्भावनासंभृत एवानुसंधाता तस्य स्वीयकार्यस्य गौरवमनुभवेत्। अनुसन्धानकार्येईदृशस्यानन्दस्यानुभूतिरेव महत्त्वपूर्णानां तत्त्वानां सिद्धान्ता–

नाञ्चान्विष्योद्भावने सामग्रीसंकलने तथा तस्यानुशीलने चाद्भुतक्षमतां जागरयति।

अनेन प्रकारेण विषयस्पष्टीकरणेन सहानुसंधातुः एवमनोवृत्त्य-भिरुचिक्षमतादिपरिचयाऽवबोधावपि सुयोग्यनिर्देशकस्यसम्पर्के आश्रये चोपलब्धे सत्येव प्राप्तौ भवतः। स स्वामभिरुचिं क्षमतां च प्रति यदैव जागरुको भवति, एकस्या-पूर्वस्योत्साहस्य विलक्षणगम्भीरानुभवस्य प्राप्तिस्तस्य जायते। स च केवलमनुसन्धानकार्यैकनिष्ठो भवितुमिच्छति। स सत्वरं सामग्रीः निर्देशकादवाप्तया नूतनया दृष्ट्या विलोक्य तान् नूतनान् परिणामान् निष्कर्षांश्च परीक्षितुमिच्छति यान् प्रति तेन संकेतोऽवाप्तः। एतां स्थितिं प्राप्तमेवानुसंधानकार्यं वास्तविकरूपं गृह्णाति।

एषु विषयेषु न सावधानतया विचारो विधीयते चेत् ज्ञायतेऽस्माभिर्यद् विषयनिर्वाचनमितीदृशमनुसंधानकार्यस्योपेक्षितमङ्कंकियन्महत्त्वमादधाति। इदमनुसंधानकार्यस्यास्य बीजमस्ति, अस्य यथानियमं यथारीति च समुचित भूमौ वपनेनारोपेण च रम्य-मधुरे परिणामकुसुमफले आविर्भवितुं शक्नुतः। अन्यथा बीजे निर्बले भूमिक्षेत्रे चानुर्वरे सफलः परिश्रमो व्यर्थो जायते। वयमस्य विषयनिर्वाचनकार्यस्य ज्ञातप्रदत्तसमुचित माहात्म्यं अनुसन्धानकार्यस्य गौरवमयीपरम्परा निर्माणाय हृदयेन प्रयत्नं विधास्याम इत्याशा वर्ततेऽस्मदीयेति।



# शोधप्रविधेः महत्त्वपूर्णाः विन्दवः

कुलदीप तिवारी
शोधछात्र

**शोधप्रविधिः-** शोधो नाम प्रयत्नपूर्वकम् अन्वेषणम् , अनुसन्धानं परीक्षणं वा, येन कस्यचित् सत्यसिद्धान्तस्य उद्भावनं भवति।

अनुसन्धानं किम् ? अनु-उपसर्गात् तथा सम् उपसर्गात् धा-धातोः ल्युट-प्रत्ययेन अनुसन्धानम् इति पदं निष्पद्यते। ज्ञातविषयादज्ञाततत्त्वानामाविष्करणम् अनुसन्धानमिति वक्तुं शक्यते।

**शोधप्रकृतयः-** शोधप्रकृतयः शोधकर्तुं कार्यदक्षता सृजनशीलताम् अन्तर्दृष्टिम् तथा कल्पनाशक्तिं च प्रभावयनित। शोधस्य मौलिकतां सम्पादयितुं प्रकृतयः वैज्ञानिक प्रवृत्तिं परिपोषयन्ति। शोधः मूलतथ्यतः नूतनं ज्ञानमुपस्थापयति। शोधः भवति निपुणं, सुव्यवस्थितं यथार्थपरीक्षणं च। शोधः तर्कसंगतः वस्तुनिष्ठश्च भवति। शोधः यथाशक्ति संगृहीततथ्यस्य परिसंख्यानात्मकं विवरणं उपस्थापयति, शोधः साहसमपेक्षते। शोधः साधारणनियमानामाविष्करणे वैज्ञानिकमुत्सं प्रति प्रभावं विस्तारयति। शोधः तथ्यानामुपस्थापने दृढ़तां सम्पादयति। शोधः एकः प्रामाणिकः मार्गविशेषः, यः एकस्याः समस्यायाः विलक्षणं समाधानां कर्तुं समर्थः। शोधः सयत्नं पञ्जीकृतः विवरणविशेषः। शोधः सर्वथा उद्देश्यपूर्णः नूतनतथ्योपस्थापकश्च भवेत् ।

**शोधपरिसरः-** शोधस्य कश्चित् परिसरः शोधार्थिना निर्णेतव्यः। शोधपरिसरः विषयानुगुणः निर्द्धारितः सीमितश्च भवेत् । शोधपरिसरः प्रसङ्गानुकूलः भवेत् । शोधसन्दर्भस्य मुख्यं लक्ष्यं प्रति परिसरः उद्दिष्ट स्यात् । परिसरः प्रथमस्तरे अप्रकाशितानां-प्रकाशितानां वा पाण्डुलिपीनां सम्पादनं, द्वितीयस्तरे प्रकाशितानां पाण्डुलिपीनां सांस्कृतिकमध्ययनं वा आधारीकृत्य भवति।

**शोधप्रकाराः-** अद्यावधि भाषासाहित्यक्षेत्रे ये शोधनिबन्धाः प्रस्तूयन्ते तेषां पर्यालोचनेन त्रिविधता दृश्यते (१) मौलिकः शोधः (२) व्यावहारिकः शोधः (३) क्रियात्मकः शोधः। केचन गवेषकाः कालदृष्ट्याऽपि शोधस्य विभाजनं कुर्वन्ति- (१)

ऐतिहासिकशोधः (२) व्याख्यात्मकशोधः (३) व्यावहारिकशोधश्च। ऐतिहासिकशोधस्य प्रविधयः अपि अनेके भवन्ति। यथा इतिहासगतः, न्यायसंगतः, प्रामाणिकतथ्यभित्तिकः, ग्रन्थसूचीसम्बन्धितः, संस्थागतः, संगटनगतश्च इत्यादयः भवन्ति। समीक्षकाणां मतानुसारं बहुविधाः शोधाः भवितुमर्हन्ति तथाहि तुलनात्मकः, समालोचनात्मकः, संपादनात्मकः, तथ्यानुसंधानात्मकः वस्तुभित्तिकः, पर्यवेक्षणात्मकश्च इति।

**शोधपद्धतयः**- अनुसन्धानक्षेत्रे बहुपद्धतयः अनुसृताः भवन्ति। शोधकर्ता ताः पद्धतीः अनुसृत्य शोधकार्यं सम्पादयति। तथाहि-परम्परागता वैज्ञानिकी वद्धतिः, सर्वेक्षण पद्धतिः, शास्त्रीय पद्धतिः, तुलनात्मिका पद्धतिः, समस्यामूलक पद्धतिः क्षेत्रीयाध्ययनपद्धतिः वर्गीयाध्ययनपद्धतिश्चेति। एतदतिरिक्तया विनियुक्ता पद्धतिः, मूल्यनिर्द्धारणात्मिका पद्धतिः, अवसथाध्यायनात्मिका पद्धतिः, सत्रबद्धप्रकाश्यापद्धतिः दृश्यन्ते।

**संस्कृतभाषया गवेषणार्थं योग्यता**- एकस्य गवेषकस्य न्यूनातिन्यूनं अग्रलिखिताः गुणाः भवेयुः। यथा जिज्ञासा, गृहीतविषये ज्ञानं, भाषादक्षता, कार्येअभिरूचिः, कृतज्ञता, वैज्ञानिकी दृष्टिभङ्गी, लेखननैपुण्यं चेति। एक गवेषकः प्रशस्तमनाः भवेत, सूक्ष्मविचारकः भवेत, प्रामाणिकं तथ्यं सुविस्तृतं समालोचयितुं समर्थः स्यात् । उच्चशिक्षितः स्यात् , तथ्यविश्लेषणाय शोधपद्धतीनां ज्ञाता स्यात् , बहूनां सूचनानाम् संग्रहणे च ज्ञानवान् भवेदिति।

**शोधविषयनिर्वाचनम्** - शोधकार्यस्य प्रथमपदक्षेपः विषयनिर्वाचनम् । शोधविषयनिरूपणाय समीक्षकाः पद्धतिविशेषान् प्रदर्शयनित। तथाहि योजनाबद्धपद्धतिः, स्वच्छन्दा वैयक्तिकी पद्धतिः, विषयसूचीनिर्माणपद्धतिश्चेति। विषयनिर्वाचनप्रसङ्गे केचन अवधातव्याः सिद्धान्ताः भवन्ति। तथाहि-रूचिसिद्धान्तः, उपयोगिता सिद्धान्तः, क्षेत्रसिद्धान्तः, विषयसूची सिद्धान्तः, अध्ययनक्षमता सिद्धान्तः, तथ्यसंग्रहसिद्धान्तः, योग्यनिर्देशनसिद्धान्तः।

**तथ्यसंग्रहणम्** - शोधकर्तुः प्रमुखमुत्तरदायित्वं तथ्यसंग्रहणम् भवति। संगृहीतं तथ्यं सर्वथा शोधविषयानुकूलं, मौलिकं, प्रमाणिकं, सारभूतं च भवेत् । तथ्यसंग्रहणाय केचन उपायाः भवन्ति। यथा शोधविषयश्च अध्ययनम् , लिखितप्रामाणिकतथ्यसम्बलितपत्राणाम् अन्वेषणम् , प्रामाणिक तथ्यानाम् प्रत्यक्षनिरीक्षणं, क्षेत्रकार्यसम्पादनम् , प्रश्नावलीप्रस्तुतीकरणम् ।

**भाषान्तरीकरणम्** – एकया भाषया प्रकटितः भावः अपरया भाषया यदा प्रकाश्यते, तथा भाषान्तरीकरणमुच्यते। एकस्याः भाषायाः भाषान्तरेण प्रकाशनं नाम भाषान्तरीकरणमित्यर्थः। भाषान्तरीकरणे कदाचित् अक्षरसः परिवर्तनम् कदाचित् भावस्य परिवर्तनम् वा विधीयते। भाषान्तरीकरणस्य केचन नियमाः भवेयुः।

**समीक्षात्मक ग्रन्थ सम्पादनप्रविधिः**– कालक्रमेण मूलग्रन्थानां नष्ठग्रायत्वात् लिपिकाराणां वा असावधानतावशतः ताडपत्रग्रन्थेषु, भुर्जपत्रग्रन्थेषु वा पाठविकृतयः सञ्जाताः। किञ्च कीटदंष्ट्रत्वात् वन्यावात्यादिकारणतोऽपि पाठविकृतयः भवन्ति। अतः विवधोपायैः संगृहीतस्य प्राचीनग्रन्थस्य शुद्धपाठनिर्णयार्थं गवेषणा विधीयते। समीक्षादृष्ट्या मूलपाठानुसन्धानेन ग्रन्थसम्पादनं समीक्षणात्मकशोधकार्यस्य प्रमुखं प्रयोजनं भवति। यत्र मूलग्रन्थ नोपलभ्यते, तत्र समुचित पाठानुसन्धानेन मूलग्रन्थस्य स्वरूपनिर्द्धारणाय प्रयासः विधेयः। समीक्षात्मकग्रन्थ सम्पादने मूलग्रन्थस्य स्वरूपोपलब्धिः प्रमुखमुद्देश्यं भवति। समीक्षात्मक सम्पादनात् प्राक् सामग्रीसङ्कलनमपरिहार्यं भवति ततः पाठचयनं करणीयम्। अनते विचारविश्लेषणेन मूलपाठनिर्णयः विधीयते। शोधकर्ता पाण्डुलिपीनां पुष्पिकां अवलम्ब्य ग्रन्थकारस्य परिचयं रचनाकालादिकं च ज्ञात्वा अन्यतथ्यसंग्रहणाय अपि उत्सं प्राप्नोति। शुद्धपाठ निर्णयविधौ गवेषकः प्रथमं सामग्री संकलनम् कुर्यात्। सामग्री संकलनं प्रति गवेषकः सचेतनः भवेत्।

**पाठचयनम्** – यदा बहुविधाः मातृकाः समुपलभ्यन्ते, तदा समुपयुक्तस्य पाठस्य चयनं मातृकासम्पादकस्य गुरुत्वपूर्णं दायित्वं भवति।

**पाठसंशोधनम्** – मातृकासु अविश्वसनीयस्य पाठांशस्य वहिष्करणेन समुचितपाठस्य संयोजनेन च पाठसंशोधनं भवति। प्रतिलिपिकृतासु मातृकासु ये भ्रमाः भवन्ति ते त्रिविधाः यथा पाठभ्रान्तयः, लोपाः, प्रक्षेपाः इति च। पाठभ्रान्तयस्तथा तत्परिहारोपायाः। गवेषणाक्षेत्रे मातृकासम्पादने विचार–विश्लेषणम् किञ्चित् उच्चतरमालोचनमिति कथ्यते। मातृकाणां पुस्तकाकारेण प्रकाशनावसरे मुद्रणसंशोधनप्रविधेः ज्ञानं नितरामावश्यकम्।

**शोधप्रबन्धनिर्माणस्य प्रविधिः**– शोधकार्यस्य परिणामः शोधप्रबन्धरूपेण समुपस्थाप्यते। शोधनिबन्धलेखनात् प्रागेवशोधकर्ता संक्षिप्तरूपेण प्रारूपं प्रस्तौति। अनेनैव निर्दिष्टशोधप्रारूपेण संगृहीततथ्यस्य निबन्धात्मकमुपस्थापनं विधीयते। शोधकार्यस्य विवरणात्मकः परिणामः मुख्यतः भागत्रयेण समुपस्थाप्यते। तथाहि (१) प्रारम्भिकः भागः (२) मुख्यप्रतिपाद्यविषयभागः (३) सूचनात्मकः परिशिष्टभागः।

पूर्वभागे केचन प्रमुखाः अंशाः भवन्ति यथा (क) शीर्षकपृष्ठम् (ख) मार्गनिर्देशकस्य स्वीकृतिपत्रम् (ग) कृतज्ञताज्ञापनपत्रम् (घ) भूमिका (ङ) विषयसूची (च) सारणीनां प्रतिकृतीनां च सूची (छ) साङ्केतिकशब्दासूची।

मुख्यप्रतिपाद्यविषयभागे अधोलिखिताः उपायाः भवितुमर्हन्ति। (१) उपक्रमः (२) मुख्याकृतिः (३) उपसंहारः

सूचनात्मकपरिशिष्टभागे– परिशिष्टम् , इतिवृत्तिः, अनुक्रमणिका।

**पाण्डुलिपिः–** संस्कृतभाषायां मातृका पाण्डुलिपिः वा अप्रकाशित–हस्तलिखितस्य लेखस्य कृते व्यवह्रियते। इदानीं भारतवर्षे हस्तलेखाः ताडपत्रग्रन्थेषु, शिलाफलकेषु, भुर्जपत्रेषु, कार्पासपट्टिकासु, काष्ठफलकेषु, ताम्रफलकेषु, शिलाफीकेषु, कर्गजपत्रेषु वा विलिखिताः नानासंग्रहालयेषु सुरक्षिताः सन्ति। अस्माकं भारतीयसंस्कृतेः ऐतिहास्य ज्ञानस्य च मूलस्रोतस्तत्रैव विद्यते।

मातृका अथवा पाण्डुलिपिः इति शब्दः आङ्लभाषायां Manuscript इत्युच्यते। मातृका संपादने स्थानानुसारं अपेक्षितवस्तूनां संग्रहणं करणीयम् ।

**लिप्यन्तरीकरणम् –** एकस्यां भाषायां दक्षः गवेषकः यदा अपरासु भाषासु लिखितस्य साहित्यस्य संग्रहणं कुरूते, तदा तत्तभाषाणांलिपिज्ञानमपेक्ष्यते। एतदर्थं लिप्यन्तरीकरणस्यावश्यकताऽनुभूयते। "एकस्याः भाषायाः उच्चारणानुसारमनुरूपवर्णेषु भाषान्तरेण पुनः प्रकाशनं नाम लिप्यन्तरीकरणं भवति।"

लिप्यन्तरणानन्तरं मार्गनिर्देशकस्य निर्देशानुसार विषयवस्तुसम्बन्धिसामग्रीणां सङ्कलनमपि गवेषकस्य प्रमुखं कार्यं बोभवीति। तदनन्तरं विषयसम्बन्धिगवेषणामूलकं यावच्छक्यं निखिलं ज्ञानं स्वकीये शोधप्रबन्धे अवश्यमेव देयम् ।



# पाण्डुलिपि सम्पादन के घटकों का मूल्याङ्कन

**डॉ. सुरेश पाण्डेय**
सहायक आचार्य व्याकरण

हस्तलेखों की प्रतिलिपि लिपिकारों द्वारा की जाती थी। जिसमें अशुद्धियाँ, त्रुटियाँ, भ्रान्तियाँ तथा पाठक्षय (छूट जाना) आदि दोष रहते हैं, जिसमें सम्पादन कर्ता विभिन्न पाण्डुलिपियों का अध्ययन कर लेखक की मूल भावना को आदर देते हुए शुद्ध पाठ का निर्धारण करता है। अतः किसी लेखक की मौलिक कृति का ही एक ऐसा हृद्य-अनवद्य संस्करण तैयार करना जो आद्यन्त शुद्ध हो सम्पादन कहलाता है।

अनेक कारणों से ग्रन्थकार का प्रयोग विकृत होकर विभिन्न रूप ग्रहण कर लेता है। उपलब्ध पाठों में से ग्रन्थकार का कौन-सा है और उपलब्ध पाठों में भी कोई उपयुक्त या अभीष्ट पाठ नहीं है, तो हस्तलेखों के आधार पर लेखक के अभीष्ट पाठ का अन्वेषण करना पाठानुसन्धान कहलाता है। जिसके लिए पाठालोचन शब्द उपयुक्त नहीं है क्योंकि पाठालोचन शब्द में गुण-दोष निरूपण का भाव है। अज्ञात के अनुसन्धान का नहीं, जबकि इस विषय में लेखक के अनुपलब्ध पाठ की गवेषणा ही एकमात्र उद्देश्य है। पाठालोचन में विभिन्न प्रतियों में प्राप्त पाठान्तरों की आलोचना होती है अवश्य, किन्तु वह तो प्रक्रिया है उद्देश्य नहीं।

पाठानुसन्धान का अर्थ अनभिज्ञ लोग प्रतिलिपियों में प्राप्त पाठों को अपनी दृष्टि से संशोधित करना समझ लेते हैं। किन्तु पाठानुसन्धान का यह अर्थ कदापि नहीं है। यदि पाठानुसन्धान की प्रक्रिया यही है तो इसमें रचयिता के द्वारा लिखा गया पाठ भी सुधार से नहीं बच सकता है क्योंकि अधिक सम्भव तो यही है कि प्रतिलिपियों में प्राप्त विविध पाठों में से कोई पाठ ग्रन्थकार का पाठ हो और ग्रन्थकार के द्वारा लिखे गये पाठ को संशोधित करने का अधिकार किसी को नहीं है। यह ठीक है कि पाठानुसन्धान के अन्तर्गत संशोधन का भी एक स्थान है किन्तु यह संशोधन भी लेखक द्वारा किये गये पाठ का नहीं वरन् प्रतिलिपिकार एवं संशोधक द्वारा लेखक के विकृत किये गये पाठ का होता है। इस प्रकार संशोधन के द्वारा भी रचयिता के पाठ

तक पहुँचने का प्रयास करता है। ऐसा संशोधन भी पाठानुसन्धायक को क्वचित् कदाचित् ही करना पड़ता है। उसका मुख्य कार्य तो अनेक पाठान्तरों में से उस पाठ को खोज लेना होता है जो लेखक का है। अतः पाठानुसन्धान का एकमात्र अर्थ है लेखक द्वारा लिखे गये पाठ का अनुसन्धान जो लेखक की मूलभावना से जुड़ा हुआ हो और जो अनेक कारणों से विकृत अथवा लुप्त हो गया है। उदाहरण से यह बात स्पष्ट हो जायेगी–

इयं महेन्द्रप्रभृतीन्यधिश्रियश्चतुर्दिगीशानवमत्य मानिनी।
अरूपहार्यं मदनस्य निग्रहात् पिनाकपाणिं पतिमाप्तुमिच्छति[१]।।
द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी[२]।।

यदि मान लिया जाय कि श्लोक संख्या ५/७१ में मूलपाठ कपालिनः नहीं है तो बड़ी असङ्गति हो जायेगी। क्योंकि दोनों सन्दर्भ एक दूसरे से सर्वथा भिन्न तथा विरोधी हैं। प्रथम श्लोक में पिनाकपाणि (महाधनुर्धर, वीर) शिव को वर रूप में प्राप्त करने का सन्दर्भ है। यहाँ पिनाकपाणि (पिनाकी) पाठ एकदम सन्दर्भानुकूल तथा औचित्यमण्डित है।

परन्तु दूसरा प्रसङ्ग शिव की निन्दा का है और वह निन्दा पिनाकी नहीं, अपितु कपाली (अमंगलमय, उद्वेजक, अपवित्र, नरमुण्डमाल्य धारण करने वाला) शब्द के प्रयोग में ही सम्भव हो सकती है।

अतः यहाँ ग्रन्थकार की मूल भावना कपालिनः से प्रदर्शित होती है, न कि पिनाकिनः से। यदि पिनाकिनः शब्द का प्रयोग कर दिया जाय तो कालिदास की मूल भावना ही च्युत हो जायेगी, क्योंकि यहाँ भगवान शंकर को आडम्बरी व मरघट में निवास करने वाला दूषित प्रदर्शित किया गया है। और यदि पिनाकिनः पद रखा जाय तो पिनाक धनुर्धारी जो शंकर जी का भूषण है दूषण नहीं। अतः पाठानुसन्धान में लेखक की मूलभावना का विशेष ध्यान रखना चाहिये।

जिनका पाठानुसन्धान की विभिन्न परिभाषायें विभिन्न विचारकों द्वारा दी गयी हैं जिनका विश्लेषण आवश्यक है।

१. पाठों को यथासम्भव उनके मूलरूप में पुनः प्रतिष्ठित करने की प्रविधि पाठानुसन्धान है।[३]

इंसाइक्लोपीडिया अमेरिकाना

२. पाठानुसन्धान साहित्यिक रचनाओं के अध्ययन की वह पद्धति है जिसका लक्ष्य सुरक्षित अभिलेखों के आधार पर लेखक के शब्दों के निकट पाठ स्थापित करना है।[४]

इंसाइक्लोपीडिया अमेरिकाना

३. जहाँ किसी रचना के वर्तमान पाठ में सन्देह है वहाँ यथा सम्भव रचनाकार के अभिप्राय के निकट पहुँचना पाठानुसन्धान का प्रयोजन है।[५]

चैम्बर्स इंसाइक्लोपीडिया

४. एक ही ग्रन्थ की अनेक पाण्डुलिपियों में लिखित पाठों की तुलनात्मक समीक्षा करके सर्वशुद्ध पाठ का निर्धारण करना।[६]

अभिराज राजेन्द्र मिश्र

५. सम्पादन शास्त्र वह शास्त्र है जिसके द्वारा किसी प्राचीन रचना की उपलब्ध हस्तलिखित प्रतिलिपियों आदि के आधार पर हम उस रचना का इस प्रकार संशोधन कर सकें कि जहाँ तक सम्भव हो स्वयं रचयिता की मौलिक रचना या उसकी प्राचीन से प्राचीन अवस्था का ज्ञान हो सके[७]।

मूलराज जैन

पूर्वोक्त परिभाषाओं में सबसे महत्त्वपूर्ण तथ्य है रचनाकार की मूल भावना तक पहुँचना अर्थात् उपलब्ध हस्तलिखित पाठों में से सर्वसमीचीन पाठ का अनुसन्धान करना है। जिसमें डॉ. सत्येन्द्र ने जिन सिद्धान्तों को स्वीकार किया है। उन्हीं सिद्धान्तों का परिष्कृत स्वरूप प्रो. अभिराज राजेन्द्र मिश्र ने शोधप्रविधि एवं पाण्डुलिपि विज्ञान में स्वीकृत किया है। जिन्होंने तीन प्रमुख सिद्धान्तों को मान्यता दी है। वे इस प्रकार हैं[८]–

१. स्वैच्छिक पाठ निर्धारण सिद्धान्त

२. तुलनात्मक पाठ निर्धारण सिद्धान्त

३. शास्त्रीय पाठ निर्धारण सिद्धान्त

सम्पादक पुस्तक का सम्पादन करते समय जो प्रति उसे उपलब्ध हुई है, उसी पर निर्भर रहकर सम्पादित ग्रन्थ में वह उन दोषों को दूर कर देता है, जिन्हें वह दोष समझता है। इसे स्वैच्छिक पाठ निर्धारण कहते हैं। और इसी को डॉ. सत्येन्द्र ने स्वेच्छया पाठ निर्धारण कहा है।

दूसरी प्रणाली में ग्रन्थ की एक ही पाण्डुलिपि की कई प्रतियाँ उपलब्ध हो जाती हैं। इस स्थिति में विद्वान् पाठानुलोचक सभी प्रतियों के परिवर्तनीय अंश की तुलनात्मक समीक्षा करता है तथा समस्त विकल्पों की गुण–दोष समीक्षा करता है। इसके अनन्तर उसे जो पाठान्तर सर्वश्रेष्ठ प्रतीत होता है। उसे ग्रहण कर लेता है। जिसे तुलनात्मकपाठ निर्धारण सिद्धान्त कहते हैं। इसे डॉ. सत्येन्द्र ने तुलनात्मक–स्वेच्छया–सम्पादनार्थ–पाठनिर्धारण की संज्ञा दी है।

एक ग्रन्थ की उपलब्ध पाण्डुलिपियों में भिन्न पाठों की त्रुटियों में साम्य–वैषम्य देखा जाता है। तदनन्तर उपलब्ध प्रतियों का पौर्वापर्य निश्चित करते हुए उनका वंशवृक्ष तैयार किया जाता है। और अंततः सर्वसम्मत, सर्वग्राह्य तथा सर्वशुद्ध पाठ का निर्धारण किया जाता है। इस पाठ को डॉ. सत्येन्द्र ने वैज्ञानिक पाठ निर्धारण कहा है।

पूर्वोक्त प्रथम दोनों सिद्धान्तों में सम्पादक ही स्वतः प्रामाण्य होता है। जिनमें स्वेच्छा ही प्रधान होती है। जो कभी–कभी मौलिक ग्रन्थ को भी अपलापक सिद्ध कर देती है। अतः इनसे पृथक् तीसरा सिद्धान्त शास्त्रीयपाठनिर्धारण सिद्धान्त ही ग्राह्य है।

डॉ. सियाराम तिवारी ने पाठानुसन्धान के पाँच सिद्धान्तों को स्वीकार किया है। वे इस प्रकार हैं[1]-

१. अनुदारवादी
२. उदारवादी
३. मिश्रित अथवा वैज्ञानिक
४. साहित्यिक
५. संकलनवादी

पूर्वोक्त स्वीकृत पाठों में अनुदारवादी, उदारवादी और मिश्रित अथवा वैज्ञानिक को क्रमशः स्वैच्छिक, तुलनात्मक और शास्त्रीय पाठनिर्धारण में ही अन्तर्भूत हो जाते हैं। और साहित्यिक भी स्वैच्छिक पाठ निर्धारण का एक विशेष अंश है। परन्तु संकलनवादी में पाण्डुलिपि में त्रुटित पाठों का संकलन करना किसी पाठ का निर्धारण नहीं करना अभीष्ट माना है। जो पाठक की दृष्टि से उचित नहीं है। क्योंकि पदे–पदे पाठक का रसभंग होगा और अभीष्ट पाठ को प्राप्त करने में समय व्यय करेगा और मन्दबुद्धि पाठक तो कदाचित् ग्रन्थाध्ययन ही नहीं कर सकता है। अतः पूर्वोक्त शास्त्रीयपाठनिर्धारण पाण्डुलिपि सम्पादन में सबसे महत्वपूर्ण सिद्धान्त है।

जिससे सर्वशुद्ध, हृद्य-अनवद्य अर्थ ग्रहण होता है।

**सन्दर्भ संकेत**


१. कुमारसम्भवम् ५.५३
२. कुमारसम्भवम् ५.७१
३. पाठानुसन्धान-डॉ. सियाराम तिवारी, पृ. १५ स्मृति प्रकाशन इलाहाबाद
४. पाठानुसन्धान-डॉ. सियाराम तिवारी, पृ. १५ स्मृति प्रकाशन इलाहाबाद
५. पाठानुसन्धान-डॉ. सियाराम तिवारी, पृ. १५ स्मृति प्रकाशन इलाहाबाद
६. शोधप्रविधि एवं पाण्डुलिपि विज्ञान-अभिराज राजेन्द्र मिश्र अक्षयवट प्रकाशन, इलाहाबाद
७. पाठानुसन्धान-डॉ. सियाराम तिवारी, पृ. १५ स्मृति प्रकाशन इलाहाबाद
८. शोधप्रविधि एवं पाण्डुलिपि विज्ञान अभिराज राजेन्द्र मिश्र अक्षयवट प्रकाशन, इलाहाबाद
९. पाठानुसन्धान-डॉ. सियाराम तिवारी, पृ. १५ स्मृति प्रकाशन इलाहाबाद




# लिपि - ब्राह्मी एवं खरोष्ठी

अनीता सिंह
शोधच्छात्रा

मनुष्य एक सामाजिक, चिन्तनशील एवं परिवर्तनशील प्राणी है। आदिकाल से लेकर आज तक अनेक प्रकार के अनेक परिवर्तन हुए हैं, यह परिवर्तन किन क्षेत्रों में कितना प्रभावी है? इन सबको जानने के लिए, हमें अपने इतिहास को जानना होगा, और इतिहास जानने के लिए हमें पाण्डुलिपियों का सहारा लेना होगा। पाण्डुलिपियों के माध्यम से ही हम अपने इतिहास, अपनी संस्कृति एवं अपनी प्राचीनता को जान सकते हैं।

पाण्डुलिपियाँ हमारे तत्कालीन समाज की प्राचीन इतिहास, संस्कृति एवं साहित्यिक जीवन की झाँकी प्रस्तुत करने का एक महत्वपूर्ण साधन है। पाण्डुलिपि दो शब्दों से मिलकर बना है पाण्डु एवं लिपि। पाण्डु का अर्थ है पीला, जीर्ण, पुराना, रोगी एवं हाथ तथा लिपि का अर्थ है लेख। 'लिपि' संस्कृत के लिप् धातु से बना है। 'लेपनम्' 'लेपयति, विकारंप्रशमनं या विस्तारे' इन सब की उत्पत्ति लिप् धातु से हुई है। इस प्रकार पाण्डुलिपि वह जीर्ण, पुराना लेख है, जो हमारे ज्ञान का विस्तार एवं कमियों का मार्जन करती है।

लिपि मानव का एक महान आविष्कार है। लिपि के ज्ञान से ही हम देश-विदेश की संस्कृति से परिचित हो सकते हैं अतः अपने ज्ञान का विस्तार करने के लिए हमें इन लिपियों का ज्ञान अत्यधिक आवश्यक है।

लिपियाँ कितनी हैं, इनका स्वरूप क्या है, इनका उद्‌गम एवं विकास कैसे हुआ? इस पर अनेक शोध हुए तथा आज भी हो रहे हैं, फिर भी लिपि के विषय में विद्वान् लोग एक निश्चित निष्कर्ष पर नहीं पहुँच पाये। अब प्रश्न यह उठता है कि लिपि की आवश्यकता क्यों पड़ी? यह अस्तित्व में कैसे आया?

हमें लगता है आज से लगभग दस हजार वर्ष पहले नवपाषाण युग का आरम्भ हुआ तब लोगों को अपने हाव-भाव एवं विचारों को व्यक्त करने के लिए

शायद इसकी आवश्यकता पड़ी हो। लिपि के अस्तित्व में आने के सन्दर्भ में विद्वानों की दो दृष्टियाँ हैं। एक दृष्टि पाश्चात्य वैज्ञानिक डार्विन के विकास के आधार पर और दूसरी दैवी सिद्धान्त की। डार्विन का विकासवाद मानव सभ्यता को पाषाणयुग, लौहयुग, ताम्रयुग से संक्रान्त हुई मानता है।

करीब छः हजार साल पहले ताम्रयुग की शुरुआत हुई और पहली बार ताम्रयुग में बहुत सारी लिपियों ने जन्म लिया। प्राचीन भारत की सिन्धु सभ्यता और मेसोपोटामिया, मिस्र और चीन की प्राचीन सभ्यताएँ ताम्रयुग की सभ्यताएँ थी, इन सभी सभ्यताओं ने लिपियों को जन्म दिया। लिपियों का आरम्भ चित्रसंकेतों तथा भाव चित्रों से हुआ और इन्हीं चित्र एवं भाव संकेतों से लेखन का आरम्भ माना जाता है।

प्राचीन सुमेर से सबसे पुरानी लिपि के लेख प्राप्त हुए हैं। जो सुमेरी लिपि कहलायी। यह लिपि मुख्यतः भावचित्रात्मक थी।

इसके बाद आज से ३००० ई.पू. मिस्र से पुरालेख प्राप्त हुए, इन लेखों में जो लिपि प्रयुक्त थी उसे हाइरोग्लिफिक लिपि के नाम से जानते हैं। यह लिपि कुछ विकसित लिपि थी, इसमें कुछ ध्वनि संकेत भी अस्तित्व में आ गये थे। इस लिपि के दो रूप मिलते हैं, जिन्हें हम हिराटिक और देमोटिक लिपियों के नाम से जानते हैं। इस समय तक चीनी लिपि का भी जन्म हो चुका था। यह भाव चित्रात्मक लिपि थी।

इसके बाद सिन्धु लिपि आती है, यह ताम्रयुग की ऐसी लिपि है, जिसका अभी तक उद्घाटन नहीं हो पाया है। लिपि के क्षेत्र में ये नये प्रयोग ईसा पूर्व दूसरी सहस्राब्दी के उत्तरार्द्ध में शुरू होते हैं। ईसा पूर्व १२०० के आस-पास से अक्षरात्मक या वर्णमालात्मक लिपियों का जन्म होने लगा। इसके बाद लगभग १००० ई.पू. तक कई व्यंजन मालाएँ अस्तित्व में आयी। इस समय की इन व्यंजनमालाओं को उत्तरी सेमेटिक लिपि, कानानी लिपि फिनीशियनलिपि आदि नाम दिये गये हैं।

इसके बाद युनानी लिपि आती है, जिससे कालान्तर में रोमन आदि यूरोप की लिपियों का विकास हुआ। इसके बाद सेमेटिक लिपि से आरमेई लिपि का विकास हुआ। कालान्तर में इस आरमेई लिपि के आधार पर पहलवी लिपि का जन्म हुआ, फिर पारसियों ने आरमेई लिपि के आधार पर एक नई लिपि बनाई जो अवेस्ता लिपि कहलाती है।

आर्मेइक/आरमेई लिपि ने ईसा पूर्व पाँचवी-चौथी सदी में हखामनी साम्राज्य के पूर्वी प्रान्तों में पश्चिमोत्तर भारत के गंधार आदि प्रदेशों में एक और लिपि को जन्म

दिया, जिसका नाम खरोष्ठी लिपि है।

ईसा पूर्व तीसरी सदी में प्राप्त अशोक के लेखों की भाषा धम्मलिपि कहा है कालान्तर में यही लिपि बंभी या ब्राह्मी लिपि के नाम से जानी जाती है। इसके बाद छठी से दसवीं सदी तक की उत्तर भारत की लिपि को सिद्धमातृका कहते हैं। इस लिपि की वर्णमाला की शुरुआत ओं नमः सिद्धम् शब्दों से की जाती है, इसलिए इसे सिद्धमातृका कहा जाता है। 'अल्बेरूनी' के अनुसार कश्मीर, वाराणसी तथा मध्यप्रदेश में सिद्धमातृका लिपि का व्यवहार होता है। जापान में होर्युजी विहार नामक प्राचीन बौद्ध मन्दिर में ताड़पत्र पर लिखि हुई उष्णीषविजय धारणी नामक एक हस्तलिपि रखी हुई है, जो सिद्धमातृकालिपि में है।

इसके बाद नागरी लिपि आती है, जिसे देवनागरी लिपि भी कहते हैं। नेपाल की नेपाली व नेवारी भाषा, मराठी भाषा, संस्कृत व प्राकृत भाषा देवनागरीलिपि में ही लिखा जाता है। दक्षिण भारत में यह नागरी लिपि नंदिन नागरी कहलाती है, कोकण के शिलाहार, मान्यखेट के राष्ट्रकूट तथा विजय नगर के शासकों के लेख नंदिर नागरी लिपि में है। उत्तर भारत में यह लिपि देवनागरी के नाम से जानी जाती है। उत्तर भारत में मेवाड़ के गुहिल, सांभर, अजमेर के चौहान बुन्देलखण्ड के चौहान तथा त्रिपुरा के कलचुरि शासकों के लेख नागरी लिपि में है।

नौवी-दसवीं सदी में अनेक प्रादेशिक लिपियों ने जन्म लिया जैसे-शारदा लिपि, टाकरी लिपि, गुरुमखी लिपि, बंगला, असमिया लिपियाँ, कलिंग लिपि, कैथी लिपि, पल्लव (काञ्ची) ग्रन्थ लिपि, केरल प्रदेश की मलयालम लिपि, तेलगु, कन्नड़ लिपि तमिल लिपि आदि। इस प्रकार ये सभी लिपियाँ स्वरूप एवं क्षेत्र विशेष से भिन्न होने के कारण भिन्न-भिन्न नामों से जानी जाती हैं। इन प्रादेशिक लिपियों के बारे में प्रमुख बात यह है कि एक तरफ इनके अक्षर प्राचीन ब्राह्मी की शैलियों के अक्षर से मिलते हैं और दूसरी तरफ आजकल की प्रादेशिक लिपियों के अक्षरों से भी मिलते हैं। शारदा लिपि कश्मीर प्रदेश की प्रमुख लिपि है। इसमें १२ स्वर तथा ३३ व्यञ्जन होते हैं। प्रसिद्ध बौद्धग्रन्थ ललित-विस्तर में लगभग ६४ लिपियों का उल्लेख है प्राचीनता की दृष्टि से इन ६४ लिपियों में ब्राह्मी एवं खरोष्ठी दो प्रमुख लिपियाँ हैं।

ब्राह्मी लिपि सम्राट अशोक के शिला लेखों तथा जोगीमारा गुफाओं में जिस लिपि का प्रयोग किया गया है उसे ब्राह्मी लिपि कहते हैं। हमारे देश के आख्यानों के अनुसार लिपि के जन्मदाता ब्रह्मा हैं, शायद इसलिए ही इसे ब्राह्मी लिपि कहा जाता

है। दूसरी बात यह लिपि विद्वज्जनों को प्रिय रही है शायद इसलिए ब्रह्म अर्थात् ब्राह्मी कहलायी। सम्राट अशोक ने इन लेखों की लिपि को धर्मलिपि कहा है, कालान्तर में यही लिपि बंभी या ब्राह्मी लिपि हो गयी वर्तमान युग में ब्राह्मी लिपि को समस्त लिपियों की जननी माना जाता है। इस लिपि का विकास ईसापूर्व पाँचवी सदी के आस-पास का रहा होगा।

लन्दन के ब्रिटिश संग्रहालय में एक बेबीलोनी फलक रखा हुआ है। यह फलक ईसा पूर्व पाँचवी सदी का है। इस पर दो लेखें प्राप्त होते हैं। एक ब्राह्मी लिपि में दूसरा बेबीलोनी कीलाक्षर लिपि में। यह लेख अशोक महान् के लेखों से अधिक प्राचीन हैं। इससे प्रतीत होता है कि ब्राह्मी लिपि का विकास सम्राट अशोक के पहले हो चुका था।

ब्राह्मी लिपि एक ध्वन्यात्मक एवं वैज्ञानिक लिपि है। इस लिपि का पूर्ण विकसित वर्णमाला है। यह लिपि सहज एवं सरल है। इसका विस्तार उत्तर भारत में देहरादून, पश्चिम में गिरनार, दक्षिम में कर्नाटक और पूर्व में उड़ीसा तक मिले हैं।

आज के भारत की सारी लिपियाँ (अरबी-फारसी-ऊर्द लिपि को छोड़कर) ब्राह्मी से विकसित हुई हैं, द्रविड भाषा परिवार की दक्षिण भाषा की तमिल, तेलुगु, कन्नड़ और मलयालम भाषाओं की लिपियाँ भी ब्राह्मी से ही विकसित हुई हैं, इसके अतिरिक्त श्रीलंका की वर्तमान सिंहल लिपि तथा वर्तमान तिब्बती लिपि भी ब्राह्मी लिपि से बनी है। इस प्रकार ब्राह्मी लिपि न केवल भारत में बल्कि विदेशों तक अपना परचम लहरायी है। इसका विकासक्रम नदी के प्रवाह जैसा है।

ब्राह्मी लिपि के समान खरोष्ठी भी एक प्राचीन लिपि है जो सदियों तक भारतीय संस्कृति की सेवा की है। ईसा पूर्व पाँचवी सदी में तत्कालीन पश्चिमोत्तर भारत में इस खरोष्ठी लिपि का जन्म हुआ। ईसा की तीसरी सदी के बाद भारत में इस लिपि का व्यवहार बंद हो जाता है। खरोष्ठी का शाब्दिक अर्थ होता है गधे की ओठ वाली।

खरोष्ठी लिपि सेमेटिक परिवार से सम्बन्द्ध आर्मेइक लिपि की उपज है। ईरान के हखामनी के शासन काल में आर्मेइक लिपि का व्यवहार पश्चिमी ऐशिया में होता था। सम्राट अशोक के शहबाजगढ़ तथा मानसेहरा अभिलेखों में तथा अनेक शक क्षत्रपों कुषाण वंश नरपतियों की मुद्राओं में खरोष्ठी लिपि में ही लेख अंकित हैं। आरम्भ में इसलिपि को इंदो-बख्त्री-बख्त्रोपालि, काबुली गांधारी आदि नाम दिये गये हैं।

फारसी लिपि की तरह यह लिपि दायें से बायें की ओर लिखी जाती है। इसकी वर्णमाला सरल है। इस प्रकार हम कह सकते हैं कि ब्राह्मी एवं खरोष्ठी दोनों

अत्यन्त प्राचीन एवं लगभग समकालीन लिपि हैं। दोनों ही प्राकृत भाषा की लिपि हैं। इन दोनों लिपियों का प्रयोग सम्राट अशोक ने अपने अभिलेखों में किया है। दोनों लिपियों का उद्घाटन यूरोप के पण्डितों के द्वारा किया गया है। दोनों ही लिपियों ने सदियों तक भारतीय संस्कृति की सेवा की है।

इन दोनों लिपियों में जितनी समानताएँ हैं उससे अधिक विषमताएँ हैं जो इस प्रकार हैं–

०१. ब्राह्मी लिपि का प्रयोग तब से लेकर आज तक चल रहा है जबकि खरोष्ठी लिपि का प्रयोग ईसापूर्व तीसरी सदी में बन्द हो गया।

०२. ब्राह्मी लिपि ने अनेक लिपियों को जन्म दिया है जबकि खरोष्ठी लिपि ने किसी भी लिपि को जन्म नहीं दिया है।

०३. ब्राह्मी लिपि का जन्म भारत में हुआ जबकि खरोष्ठी एक विदेशी लिपि है, इसका जन्म आरमेईक लिपि से हुआ है।

०४. खरोष्ठी लिपि आधुनिक महाजनी लिपि की तरह एक कामचलाऊ लिपि थी जबकि ब्राह्मी लिपि एक पूर्ण वैज्ञानिक लिपि थी।

०५. ब्राह्मी लिपि में व्यंजनाक्षरों के साथ स्वरों की खड़ी या आड़ी छोटी मात्राएँ लगती हैं जबकि खरोष्ठी में स्वर तथा इनकी मात्राओं वाले व्यंजन नहीं मिलते हैं।

०६. ब्राह्मी लिपि ध्वन्यात्मक लिपि है, इसका साहित्यिक क्षेत्र अत्यधिक विस्तृत है। खरोष्ठी एक सरल एवं सामान्य लिपि है। इसका क्षेत्र अपेक्षाकृत कम विकसित है।



